हरिनाथ प्रसाद द्विवेदी पुस्तकम्

No. 6.]

THE

# VIZIANAGRAM SANSKRIT SERIES

UNDER THE SUPERINTENDENCE OF

ARTHUR VENIS M. A. Oxon.

PRINCIPAL, SANSKRIT COLLEGE, BENARES.

THE

# BHÂSHYA

OF

# PRAŚASTAPÂDA,

TOGETHER WITH THE

# NYÂYAKANDALÎ

OF

# ŚRÎDHARA

EDITED BY

VINDHYESVARÎPRASÂDA DVIVEDIN,

LIBRARIAN, SANSKRIT COLLEGE, BENARES.

VOL. IV.

SANSKRIT TEXT.



PRINTED, PUBLISHED AND SOLD BY

E. J. LAZARUS & Co., BENARES.

MAY BE HAD FROM GANESH DAS AND CO., CHOWK, BENARES:
JAYESTHARAM MUKUNDJI AND CO., BOMBAY:
OTTO HARRASSOWITZ AND M. SPIRGATIS LEIPZIG:
LUZAC AND CO., LONDON.

1895.

PRICE, Re. 4-4-0.

No. 6.]

THE

# VIZIANAGRAM SANSKRIT SERIES

UNDER THE SUPERINTENDENCE OF

ARTHUR VENIS M. A. Oxon.

PRINCIPAL, SANSKRIT COLLEGE, BENARES.

THE

# BHÂSHYA

OF

# PRAŚASTAPÂDA

TOGETHER WITH THE

# NYÂYAKANDALÎ

OF

# ŚRÎDHARA

EDITED BY

VINDHYEŚVARÎPRASÂDA DVIVEDIN

LIBRARIAN, SANSKRIT COLLEGE, BENARES.

VOL. IV.



PRINTED, PUBLISHED AND SOLD BY

E. J. LAZARUS & Co., BENARES.

MAY BE HAD FROM GANESH DAS AND CO., CHOWK, BENARES:

JAYESTHARAM MUKUNDJI AND CO., BOMBAY:

OTTO HARRASSOWITZ AND M. SPIRGATIS LEIPZIG:

LUZAC AND CO., LONDON.

1895.

द्वित्वे च पाकजोत्पत्तौ विभागे च विभागजे
यस्य न स्खलिता बुद्धिः तं वै वैशेषिकं विदुः ॥

वैशेषिकदर्शन-

# प्रशस्तपादभाष्यम् ।

प्रशस्तपादमुनिप्रणीतम् ।

भट्टश्रीश्रीधराचार्यविरचितन्यायकन्दलीसमाख्यया
टीकया समन्वितम् ।

वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तकालयाध्यक्षेण
द्विवेदोपाख्यपण्डितविन्ध्येश्वरीप्रसादशर्मणा
संस्कृतम् ।



काश्याम् ।
मेडिकलहालनामकयन्त्रालये मुद्रितम् ।

संवत् १९५१ ।

ॐ नमः परमात्मने ॥

# वैशेषिकदर्शन-

## सटीकप्रशस्तपादभाष्यविज्ञापनम् ।

विश्वनाथपञ्चाननाः "अनेकैकत्वबुद्धिर्या सापेक्षाबुद्धिरिष्यते" इति कारिकाव्याख्यायां सिद्धान्तमुक्तावल्यां(१) "यत्रानियतैकत्वज्ञानं तत्र चित्वादिभिन्ना बहुत्वसंख्योत्पद्यते यथा सेनावनादाविति कन्दलीकारः"(२) महादेवभट्टाश्च(३) मुक्तावलीप्रकाशे(४) "यत्त्वारोपितं नीलरूपं तम इति कन्दलीकारमतम्(५)" इत्याद्युक्तवन्तः । तदवलोक्य(६) कोऽसौ कन्दलीग्रन्थः कश्च कन्दलीकार इति निर्णेतुमिच्छन्नहं माधवीये सर्वदर्शनसंग्रहे(७) औलूक्यदर्शने(८) "द्रव्यं तम इति भाट्टा वेदान्तिनश्च भणन्ति" "आरोपितं नीलरूपमिति श्रीधराचार्याः" इति दृष्ट्वा वैशेषिकशास्त्रसम्बन्धी कश्चित् कन्दलीग्रन्थः श्रीधराचार्यश्च कन्दलीकार इत्यनुमितवान् ॥

---

(१) अस्मन्मुद्रितपुस्तके पृष्ठे २२८ पङ्क्तौ ६ ।

(२) पाठोऽयं न्यायकन्दल्यामानुपूर्व्या नोपलभ्यते । मुक्तावलीप्रकाशे तु प्रक्षिप्तत्वेनावधृतः ।

(३) महादेवभट्टोऽयं भारद्वाजबालकृष्णभट्टात्मजो मुक्तावलीप्रकाशमुपमानखण्डान्तं निर्माय परलोकं गतस्तदनन्तरं तत्पुत्रेण दिवाकरेण ग्रन्थः पूर्णतां नीतः अत एव दिनकरीति नामान्तरमस्येति तद्ग्रन्थस्याद्यन्तपद्याभ्यामवगम्यते । दिवाकरेण वृत्तरत्नाकरटीकायामप्युक्तम् ।

"भारद्वाजकुले श्रुतिस्मृतिपटुः श्रीसूर्यभक्तस्तथा
अयमाराधनतत्परोऽपि ? च महादेवोऽभवत् तार्किकः ।
तत्पुत्रेण दिवाकरेण रचिते श्रीवृत्तरत्नाकरा·
दर्शे भट्टमतानुसारिणि परं षष्ठः समाप्तिं गतः ॥
पूर्णाब्धिसप्तैकमिते (१७४०) प्रवर्षे सत्कार्त्तिके मासि विशुद्धपक्षे ।
तार्तीयपूर्णे दिवसे सुपुण्ये ह्यादर्श इत्थं घटितः समाप्तः ॥

इति श्रीमद्भारद्वाजबालकृष्णभट्टात्मजमहादेवभट्टसूनुदिवाकरकृत"इत्यादि ॥
अत्र वर्षो वैक्रमो बोध्यो यतः १६९९ शालिवाहनशकलिखितं पुस्तकमुपलभ्यते ॥

(४) अस्मन्मुद्रितपु· पृ· २५ पं· १७ ।

(५) न्यायकन्दल्याम् पृ· ९ पं· २४ ।

(६) चित्सुख्यां २ परिच्छेदे ६ कारिकाव्याख्यायाम् । "सामान्यवानगुणः संयोगविभागयोर्निरपेक्षो न कारणं गुण इति कन्दलीकारस्य गुणलक्षणम् ।"

(७) एशियाटिकसोसाईटीमुद्रितपुस्तके पृ· ११० पं· ९ ।

(८) औलूक्यदर्शनं वैशेषिकदर्शनमेवेति वक्ष्यामः । तच्च विशेषं पदार्थभेदमधिकृत्य कृतम् ।

ततश्च सम्प्रार्थितैः श्रीमद्गुरुचरणैस्तदानीमुक्तं "न्यायकन्दली प्रशस्तपादभाष्यटीका तत्पुस्तकं च वाराणसीस्थराजकीयसंस्कृतपाठशालीयस्य प्रधानन्यायाध्यापकस्य पण्डितकालीप्रसादशिरोमणेः पुस्तकालये(१) वर्तते" इति। तत्पुस्तकार्थमभ्यर्थ्यमाना उक्तमहाशयास्तद्दर्शयन्तो यदस्मात् पुस्तकात् सम्पादनीयं कार्यम् तदस्मत्पुस्तकालय एव विधेयमिति वदन्तोऽचिरेणैव कालेन परलोकमगच्छन्निति स्वप्नवत् तदुपलब्धिं मन्यमानः खिन्नचित्तोऽतिष्ठम् ॥

ततः परं वैशेषिकदर्शनानुरागिणां प्रमोदाय उदयनाचार्यविरचितकिरणावलीटीकासंवलितप्रशस्तपादभाष्ये मुद्रयितुमुपक्रान्ते ऽपि "उद्यमेनैव सिद्ध्यन्ति कार्याणि न मनोरथैः। न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥" इत्यनुसरन् काश्मीरप्रदेशमधिष्ठितेनैकेनास्मन्मित्त्रेण प्रेषितं किरणावलीसहितमेकं तत्पुस्तकं द्वितीयं च वाराणसीस्थपण्डितवरश्रीविभवरामशर्मभिर्दत्तं प्राप्तवान् ततः पुस्तकद्वयेनास्य मुद्रणं सम्यग्भविष्यतीत्यवधारितवांश्च ॥

अत्रान्तरे वाराणसीस्थराजकीयसंस्कृतपाठशालाप्रधानाध्यक्षश्री१०० युत—आर्थरवेनिससाहबमहाशयानां निदेशेनास्य निबन्धस्यास्यां पुस्तकश्रेण्यां मुद्रणार्थं प्रवृत्ते मयि त एव महाशयाः श्रीयुतबुलरसाहबमहाशयसंगृहीतं पुण्यपत्तन( पूना )स्थडेक्कनकालेजसञ्ज्ञकविद्यालयस्थं न्यायकन्दल्याः पुस्तकद्वयमानाय्य प्रदत्तवन्तः। इत्थं पुस्तकचतुष्टये सम्पादिते पण्डितश्रीविभवरामशर्मणां पुस्तकं प्रशस्तपादभाष्यगर्भितं प्राचीनं वाराणसेयमिति(२) प्रथमत्वेन कल्पितम्। काश्मीरादानीतं मिश्रितभाष्यं नवीनत्वेन प्रतीयमानमिति(३) द्वितीयत्वेन पुण्यपत्तनस्थमेकं खण्डितं नवीनमशुद्धिबहु-

---

(१) दिगन्तविश्रान्तकीर्तिभिः श्रीचन्द्रनारायणभट्टाचार्यैः सम्पादितं पुस्तकं पुरुषपरम्परया तत्सम्बन्धित्वादुत्तराधिकारित्वाच्च कालीप्रसादशिरोमणिना प्राप्तम् ॥

(२) अस्मिन् पुस्तके यद्यपि लिपिकालो न लिखितस्तथापि जीर्णत्वाद्वर्षाणां त्रिशत्याः पूर्वं लिखितमित्यनुमीयते ॥

(३) अस्य पुस्तकस्यान्ते "समाप्तेयं पदार्थप्रवेशन्यायकन्दलीटीका। कृतिस्तत्रभवतो भट्टश्रीश्रीधरस्येति शिवम्। शुभमस्तु लेखकपाठकयोः।

कणादकृतमूलदृब्धा प्रशस्तभाष्यद्रुमावबद्धा च।
श्रीधरहृदयोपवने विलसन्ती न्यायकन्दली रम्या ॥
गुरुवररत्नाकरकादधीत्य सम्यग् विवेकेन।
वर्षे वेदेषुमिते लिखितैषा भट्टनरकेण ॥
सं॰२९ भा॰ शु॰ बु॰ समाप्तम् ॥"

लं(¹) तृतीयत्वेन अपरं प्राचीनत्वेन प्रतीयमानं शारदाक्षरलिखितं क्वाचित्कटिप्पणीसहितं परिशुद्धं(²) चतुर्थत्वेन ॥

तत्र प्रथमद्वितीयचतुर्थपुस्तकानि एकस्मादेवादर्शपुस्तकात् परमादर्शपुस्तकाद्वा साक्षात् परम्परया वा लिखितानि यतः परमादर्शपुस्तके जीर्णत्वात् कीटादिदूषितत्वाद्वा यत्र यत्राक्षराणि विलुप्तान्यासन् तान्युक्तादर्शपुस्तकेषु तत्र तत्रैव चिह्नादिना सूचितानि । एषु पाठभेदाश्च लेखकशोधककल्पिता एव । परन्तु एकस्मादेव निबन्धकर्तृपुस्तकाद्बहूनि पुस्तकानि लिखितानि भवन्तीति मनसि निधाय तानि त्रीण्यपि शोधनकार्ये उपयुक्तानीति निर्णीतम् । तृतीयं तु पुस्तकं श्रीयुतबुलरसाहबसंगृहीतं विलुप्ताक्षरपूरणे महदुपकारकं क्वचित् पाठभेदे चेति पुस्तकचतुष्टयाच्छोधनपूर्वकं मुद्रणमारब्धम् ॥

तृतीयादर्शपुस्तके यत्र कुत्रचित् पाठानां न्यूनाधिक्यमप्यस्ति किन्तु तत् पुस्तकं परिमाणनिरूपणमारभ्य समाप्तिपर्यन्तं वर्तते तावदेव पाठानां न्यूनाधिक्यविवेकः परिमाणनिरूपणात् पूर्वं तु तत्पुस्तकोपलब्ध्यभावे तदभावः एवं स्थिते तत्प्रयुक्ता अशुद्धयोऽपि क्वाचित्क्यः सम्भाव्यन्त इति ॥

प्रशस्तपादभाष्यस्यान्यदपि व्याख्यानं जगदीशभट्टाचार्यकृतं(³) भाष्यसूक्त्यभिधमपरं भाष्यार्थबोधकं वार्त्तिकत्वेनाभिमतं कणादरहस्याख्यं वैशेषि-

---

(१) अस्य पुस्तकस्यान्ते "एतां लिखित्वा यो न शोधयति यश्च एतस्याःमुपायं न करोति यश्चैतस्यां केवलवादमुच्चरति स पञ्चानां महापातकानां फलमवाप्नोति ॥ समाप्ता च न्यायकन्दली ॥ संवत् १६३१ मिती चैतसुदी १४ लिखितमिदं व्यासठाकुरदासात्मजेन मु(मू)लचन्दाख्येन । श्रीरस्तु ।"

(२) अस्य पुस्तकस्यान्तिमपत्रे द्वितीयत्वेन कल्पितस्योक्तपुस्तकस्यान्तिमपत्रे लिखितमेव पद्यद्वयं विभिन्नलेखकेन विभिन्नलेखन्या लिखितं तत्त्वैवम् ।

"विद्वद्वरभट्टनरकाकः* स्वयंलिखितन्यायकन्दल्यादर्शं प्रेक्ष्य लिखितैषा न्यायकन्दली ।
गुरुवररत्नाकरकादधीत्य लिखिता नरोत्तमेनैषा ।
वर्षे वेदेषुमिते कार्त्तिकमासे तिथौ नवम्यां च ॥"

(३) प्रारम्भवाक्यम् ।

"कणभक्षमुनेः पक्षरक्षाविन्यस्तवासनाः ।
सूक्तिं श्रीजगदीशस्य चिन्तयन्तु विचक्षणाः ॥"

परिसमाप्तिवाक्यम् ।

"इति श्रीजगदीशभट्टाचार्यकृता द्रव्यभाष्यसूक्तिः समाप्ता ॥" अस्मन्निकटेऽस्य ग्रन्थस्य पुस्तकत्रयमस्ति देशान्तरेऽपि द्वित्राणि पुस्तकानि सन्ति परन्तु द्रव्यग्रन्थस्यैव व्याख्यानं न तु गुणादीनाम् कदाचिदेतावानेव ग्रन्थो जगदीशेन रचितः । जगदीशभट्टाचार्यकृतशब्दशक्तिप्रकाशिकापुस्तकस्य १६२४ शालिवाहनशकलिखितस्योपलम्भात् तत्समयात् पूर्वं तद्ग्रन्थकर्तुः स्थितिरिति सुव्यक्तम् ॥

---

* अत्र 'काक'शब्दो भट्टावान्तरजातिवाचकः । केचित्तु 'नराक' एवं पाठं कल्पयन्ति ॥

कणूचोपस्कारकर्त्रा शङ्करमिश्रेण विरचितं(१) ममान्तिक एव वर्तते। परन्तु सर्वेषामेकदैव मुद्रणं बहुपरिश्रमचिरकालसाध्यं पुस्तकस्यापि महत्त्वं सम्भाव्य क्रमिकमेव मुद्रणमारब्धम् ॥

न्यायकन्दल्या अपि व्याख्यानानि(२) वर्तन्ते किन्तु तेषां परिशुद्धपुस्त-

---

(१) प्रारम्भवाक्यम्।

"जयति रतिविलासे संगमः शङ्करस्य स्मरनिगडनिरुद्धः काञ्चनः शैलपुत्र्याः।
गरलकवलकालीभूतभूतेशकण्ठस्थलजलधरविद्युद्विभ्रमा बाहुवल्लिः॥

द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां तत्त्वज्ञानं निःश्रेयसाधिगम इति प्रशस्तदेवाचार्यभाष्यव्याख्याच्छलेन कणादरहस्यं व्याख्यास्यामः।" इत्यादि।

पद्मनाभकृता प्रशस्तपादभाष्यस्य सेत्वाख्या टीका तु क्वचिदुपलभ्यते। कोलाचलमल्लिनाथसूरिविरचितं भाष्यनिकषाख्यं तु व्याख्यानं तद्विरचिततार्किकरक्षाव्याख्यानदर्शनादवगम्यते पुस्तकं तु नोपलब्धम्।

(२) प्रारम्भवाक्यम्।

"उपदिष्टा गुरुचरणैरस्पृष्टा वर्द्धमानाद्यैः।
कन्दल्याः सारार्थास्तन्यन्ते पद्मनाभेन॥"

परिसमाप्तिवाक्यम्।

"इति श्रीसन्मिश्रबलभद्रात्मजविजयश्रीगर्भजश्रीपद्मनाभमिश्रकृतौ न्यायकन्दलीसारः समाप्तः॥"

अयं पद्मनाभमिश्रः किरणावलीभास्कराख्यकिरणावलीटीकाकार एवेति व· सं· सी· मु· किरणावलीभूमिकादर्शनाद् व्यक्तं भविष्यति॥

अनेन कणादरहस्याख्योऽपि ग्रन्थो निर्मितः पिटरसनमहाशयसङ्कलिते रिपोर्टपुस्तके १८८७ सन्मुद्रिते पृष्ठे २६१ द्रष्टव्यः।

व्यवहारप्रदीपकारस्तु पद्मनाभमिश्रो भिन्न एव तथाहि।

व्यवहारप्रदीपारम्भे।

"अशेषजगदज्ञानतिमिरौघरविप्रभा।
तनोतु शारदा सिद्धिमुद्यमे विदुषां सदा॥ १॥
यमुनापुराभिधानं नगरं भूलोकविश्रुतं जयति।
क्ष्मातलमिवावतीर्णः स्वर्गः साक्षाद्विलोक्यते मनुजैः॥ २॥
तत्राभवद्द्विजवरः परमप्रतिष्ठापात्रो यशोनिधिरशेषगुणानुरागी।
विख्यातपोविनयकीर्त्यतुलः पृथिव्यां सन्तोषकृद्गुणवतां शिवदासनामा॥ ३॥
शिवदासात्मजः श्रीमान् गङ्गादासो गुणावधिः।
आसीद्द्विजवरः पृथ्वीपालमालार्च्चितः सदा॥ ४॥
गङ्गादासः सुमतिरमितख्यातिवेदादिविद्या-
नित्याचारव्रतनियमवान् श्रीनृसिंहाङ्घ्रिभक्तः।
पुत्रः पृथ्व्यामखिलगुणिनां माननीयैः स्वपुण्यै-
राप्तो येन प्रथितयशसा कृष्णदेवाभिधानः॥ ५॥
कृष्णदेव इति नामसमेतं प्राप यस्तनयमेव निधानम्।
वेदशास्त्रसुकृतोपकृतानां यः सदास्ति हृदये सुकृतीनाम्॥ ६॥
ज्ञात्वाखिलं ब्रह्म विहाय मिथ्या यः केवलब्रह्मनिविष्टबुद्धिः।
कृत्वा स्वकार्यं जपयज्ञपूतं तत्याज काश्यामतुलप्रभावः॥ ७॥
तच्चरणाम्बुजरेणोः प्रसादमासाद्य तत्सुतो गुणवान्।
किल पद्मनाभनामा कुरुते व्यवहारप्रदीपाख्यम्॥ ८॥"

कालाभादुक्तकारणाच्च तन्मुद्रणमुपेक्षितम् । न्यायकन्दल्याश्चतुर्थपुस्तके वर्तमाना टिप्पण्यपि कणादसंग्रहादि(१)निबन्धेभ्य उद्धृता स्वल्पा अशुद्धा चेत्यनुपयुक्तत्वात् साप्युपेक्षिता ॥

प्रशस्तपादभाष्यसहितस्यास्य मुद्रणं युक्तमिति विचार्य भाष्यस्यापि आदर्शपुस्तकत्रयं सम्पादितम् तत्र किरणावलीसंवलितमस्मन्मुद्रितं पञ्चमत्वेन कल्पितम् । अपरं बङ्गाक्षरं प्राचीनं स्वकीयं षष्ठत्वेन(२) अन्यत् बङ्गाक्षरं नवीनं वाराणसीस्थराजकीयसंस्कृतविद्यामन्दिरस्थं सप्तमत्वेन ॥

प्रायो बहुष्वपि प्राचीनेषु नवीनेष्वपि निबन्धेषु लेखकशोधकादिकृताः पाठभेदाः पुस्तकभेदादुपलभ्यन्ते । एवं व्याख्याकाराणां मतभेदादपि क्वचित् पाठभेदा उपलभ्यन्त इति नैव तिरोहितमस्ति विदुषाम् । एवं सति प्रशस्तपादभाष्ये ऽपि पाठभेदाः सञ्जाताः ॥

एवं स्थिते कन्दलीकारसम्मतपाठगर्भितभाष्यपुस्तकोपलब्ध्यभावात् उपलब्धेषु च भाष्यादर्शपुस्तकेषु किरणावल्यादिटीकासम्मतपाठोपलम्भात् उपलब्धेषु कन्दलीपुस्तकेषु क्वचिद्भाष्यटीकयोर्वैषम्यात् वैकल्यात् आर्थिकप्रतीकधारणाद्चापि मुद्रितपुस्तके क्वचित् टीकामूलवैषम्यं सम्भाव्यते । प्रथमपुस्तके मूलसाकल्ये ऽपि टीकामूलवैषम्यादस्य परमादर्शपुस्तके मूलं टीका च पृथगेवासीत् लेखकेन संयोजितमित्यनुमीयते । षष्ठे पुस्तके प्रायः कन्दलीकारसम्मताः पाठा वर्तन्त इति तस्मात् पुस्तकात् प्रतीकादिना च यथासम्भवं निश्चित्य भाष्यपाठा मूले स्थापिता अन्ये पाठभेदाष्टिप्पण्याम् ॥

अस्य मुद्रणसमये न्यायकन्दल्याः बह्वादर्शपुस्तकोपलब्ध्यभावात् उपलब्धेष्वपि प्रदर्शितावस्थेष्वादर्शपुस्तकेषु चतुर्थं पुस्तकं श्रीयुतबुलरसाहब-

---

ज्योतिषसंहिताग्रन्थोऽयं श्लोकानां षट्सहस्र्या संपूर्णः । ज्ञानप्रदीपोऽप्यनेनैव रचित इति सम्भाव्यते ।

न्यायकन्दल्या अपरं व्याख्यानं राजशेखराख्यजैनाचार्यकृतं तत्पुस्तकं वाराणस्यां रामचन्द्रयतेः पुस्तकालये आसीत् । अपरं च तत्पुस्तकं पिटरसनमहाशयेनाप्युपलब्धमित्युक्तरिपोर्टपुस्तके पृ॰ २७२ द्रष्टव्यम् ।

(१) कणादसंग्रहः कश्चित् प्राचीननिबन्धः यतः श्रीधराचार्येण न्यायकन्दल्याम् पृ॰ १५६ प॰ २० पृ॰ ११७ प॰ २७ उद्धृतः ।

(२) पुस्तकान्ते ।

"योगाचारविभूत्या यस्तोषयित्वा महेश्वरम् ।
चक्रे वैशेषिकं शास्त्रं तस्मै कणभुजे नमः ॥
लिखितं श्रीरामभद्रदेवशर्मणा पुस्तकम् । शकाब्दाः १६३० पौषस्य २ ॥ ० ॥"

महाशयसंगृहीतमुपयोगि किन्तु तत् काश्मीरप्रदेशप्रचलितशारदाचरलिखितम्। तच्च चास्मदचिरपरिचयात् तस्मात् कार्यसम्पादने ऽननुभूतो महानायासः कृतोऽस्माभिः॥

अत्र वाराणसीस्थराजकीयसंस्कृतपाठशालाप्रधानाध्यापकपरमपूजनीयास्मद्गुरुवरपण्डितशिरोमणि श्री ६ कैलाशचन्द्रभट्टाचार्यमहाशयैर्विषमस्थलव्याख्यानादिना सम्यगनुगृहीतोऽस्मि॥

तदिदानीमेवंविधस्य दुरूहग्रन्थस्योक्तरीत्या मुद्रणेऽस्मत्साहसं क्षमित्वा आदर्शदोषजा मुद्राप्रमादादिजाश्चाशुद्धीः संशोध्यामुं दृष्टिपूतं कृत्वा मामकीनं परिश्रमं सफलं कुर्वन्तु दयालवो विद्वांस इति प्रार्थये श्रीमन्तं विश्वेश्वरम्॥

———o———

यद्यपि कविभिः शिष्यप्रशिष्यैश्चानेकप्रकारेण निरूपणाद्वा सम्प्रदायविद्भिर्मतप्रवर्तकैश्च दुराग्रहेणान्यैश्च साहसिकैर्निर्मूलकिंवदन्तीश्रवणादिना अपरैश्च हेत्वाभासैर्भ्रमात्मकानुमानप्रमाणेन साधनात् बहूनां पुरुषाणामेकनाम्ना प्रसिद्धत्वात् एवंविधैरनेकैः कारणैरर्वाचीनानामपि निबन्धकाराणां तत्त्वेनेयत्तया विवादरहितं जीवनचरितं प्रायो नोपलभ्यते किं पुनश्चिरन्तनानां गोतमकणादप्रभृतीनां महर्षीणामन्येषामपि ऋषिकल्पानां तथापि यथोपलब्धं सप्रमाणमत्र निरूपयामि॥

तत्र तावद्वैशेषिकशास्त्रप्रणेता महर्षि(१)र्भगवान् कणादो(२) यस्मिन्

---

(१) ऋषिलक्षणं तेषां चातुर्विध्यमप्युक्तं सम्प्रदायविद्भिः।

"ऋषीणामृषिपुत्राणामृषिकाणां स्वयम्भुवाम्।
तथा नामाभिजानीयाद्यथैषां मन्त्रदृष्टयः॥
प्रवरैर्ये समाख्याता ऋषयस्त इति श्रुतिः।
तत्पुत्रपौत्रनप्तार ऋषिपुत्रा इति स्मृताः॥
राजन्यवैश्या ऋषिकाः स्त्रियस्तास्तिर्यग्योनयः१।
देवाऽदेवाप्सरो नद्यो गन्धर्वास्ते स्वयम्भुवः॥" इति।

लक्ष्मणेन प्रवररत्नग्रन्थे काश्यपगणे शाण्डिल्यवर्गे काश्यपः पठितः। "कणादः काश्यपः समा"विति त्रिकाण्डशेषः।

वायुपुराणे पूर्वार्द्धे ५९ अध्याये तु।

"ऋषीत्येष गतौ धातुः श्रुतौ सत्ये तपस्यथ।
एतत्सञ्चियते तस्मिन् ब्रह्मणा स ऋषिः स्मृतः॥ ७९॥" इत्यादि।
"यस्माच्च हन्यते मानैर्महान् परिगतः पुरः।
यस्मादृषन्ति ये धीरा महान्तं सर्वतो गुणैः॥
तस्मान्महर्षयः प्रोक्ता बुद्धेः परमदर्शिनः॥ ८२॥"

इति महर्षिलक्षणाक्रान्तत्वान्महर्षिरित्युक्तम्। विस्तरस्तु तत्रैवानुसन्धेयः मत्स्यपुराणेऽपि च॥

(२) "कणाद इति तस्य कापोतीं वृत्तिमनुतिष्ठतो रथ्यानिपतितांस्तण्डुलकणानादाय प्रत्यहं कृताहारनिमित्ता सञ्ज्ञा" इति न्यायकन्दल्याम् २ पृ॰ १३ पं॰।

काले यस्मिन् देशे आविर्बभूव तन्निश्चयः सम्यङ् न भवति तथापि "कणादः काश्यपः समा"विति त्रिकाण्डशेषकोशात् महर्षेः कश्यपस्य गोत्रे जातः औलूक्य इति नाम्ना प्रसिद्धा(१) उलूकर्षेरपत्य(२)मित्यनुमीयते । अपि च सप्तविंशतिमे चतुर्युगपरिवर्ते प्रभासक्षेत्रे शिवावतारस्य द्विजोत्तमस्य सोमशर्मणः शिष्यतां गत इति वायुपुराणे पूर्वखण्डे २३ अध्याये महेश्वरब्रह्मसंवादे निरूपितम् तेन निरुक्तकाले प्रभासक्षेत्रे तस्य कणादस्य महर्षेः स्थितिरासीदित्यवगम्यते । तथाहि

"ब्रह्मोवाच ।

भगवन् देवदेवेश विश्वरूपो महेश्वरः ।
इमास्तव महादेव तनवो लोकवन्दिताः ॥ ६० ॥
विश्वरूप महासत्त्व कस्मिन् काले महाभुज ।
कस्यां वा युगसम्भूत्यां द्रक्ष्यन्ति त्वां द्विजातयः ॥ ६१ ॥
केन वा तत्त्वयोगेन ध्यानयोगेन केन वा ।
तनवस्ते महादेव शक्या द्रष्टुं द्विजातिभिः ॥ ६२ ॥

---

(१) "वैशेषिके स्यादौलूक्य" इति कोशः । "वैशेषिकः औलूक्यः द्वे सप्तपदार्थवादिनः" इति महेश्वरः । डाक्तरकीलहार्नसंस्कृतामरकोशपुस्तके १६७ पृ॰ ।

(२) गर्गादिभ्यो यञ् ४ अ॰ १ पा॰ १०५ सू॰ । अत्र गर्गादिगणे उलूकशब्दोऽपि पठितः । काशिकायां ३६१ पृष्ठे मुद्रितपुस्तके द्रष्टव्यः । न्यायवार्त्तिके "साध्यावृत्तिस्तज्जातीयैकदेशवृत्तिर्विपक्षावृत्तिः स्वाश्रयवान् शब्दश्चाक्षुषत्वात् औलूक्यपक्षे" इत्युक्तम् । "ननु चाक्षुषत्वं न विपक्षावृत्ति समवायस्यानाश्रितस्य चाक्षुषत्वादत उक्तम् औलूक्यपक्ष इतीति" तात्पर्यटीकायां वाचस्पतिमिश्राः । "अत एवातीन्द्रियः सत्तादीनामिव प्रत्यक्षेषु वृत्त्यभावात् स्वात्मगतसंवेदनाभावाच्च तस्मादिह बुद्ध्यानुमेय" इति प्रशस्तपादभाष्यम् । समवायोऽतीन्द्रिय इति वैशेषिकसूत्रोपस्कारे ७ अ॰ २ आ॰ २६ । २८ सू॰ व्याख्याने । अत औलूक्यः कणाद एव । एशियाटिक्सोसाइटीमुद्रितन्यायवार्त्तिकपुस्तके पृष्ठे १६८ वार्त्तिकांशो द्रष्टव्यः ।

एवं भट्टकुमारिला अपि तन्त्रवार्त्तिके १ अ॰ १ पा॰ ४ सू॰ व्याख्याने उक्तवन्तः ।

"यदाप्यौलूक्यसिद्धान्तात् समवायस्य जन्मता ।
व्यक्तिस्तत्रेन्द्रियाधीना तेन प्रत्यक्षमुच्यते ॥ ५८ ॥"

आत्मनि बुद्धिसमवाय एव बुद्धिजन्म इति प्राक्तनेन ग्रन्थसन्दर्भेण व्याख्येयम् । "यदापीति । स खलु नित्योऽपीन्द्रियाधीनाभिव्यक्तिरिति प्रत्यक्षमपदेश्यते ।" इति तन्त्रवार्त्तिकटीकायां सुचरितमिश्राः । "समवायो नानाऽनित्यश्चेति प्राभाकाराः । समवायो नित्य एकोऽतीन्द्रिय" इति ७ अध्याये २ आह्निके २८ सू॰ व्याख्याने वैशेषिकसूत्रोपस्काराख्ये शङ्करमिश्राः ।

एवं सर्वदर्शनसंग्रहे माधवाचार्या अपि काणाददर्शनमेव औलूक्यदर्शननाम्ना प्रतिपादितवन्तः ।

उदयनाचार्यास्तु किरणावल्यामनुमानग्रन्थे लिङ्गनिरूपणे काश्यपोऽब्रवीदित्यत्र कश्यपात्मजः कणाद इत्याहुः । उलूकमुनिस्तु विश्वामित्राज्जात इति महाभारतेऽनुशासनपर्वणि ४ अध्याये प्रतिपादितम् । किन्तु तस्मादेव कणादो जात इत्यत्र मूलं मृग्यमित्यलं विस्तरेण ॥

भगवानुवाच ।

तपसा नैव योगेन दानधर्मफलेन वा ।
न तीर्थफलयोगेन क्रतुभिर्वा सदक्षिणैः ॥ ९३ ॥
न वेदाध्यापनैर्वापि न वित्तेन निवेदनैः ।
शक्योऽहं मानुषैर्द्रष्टुम् ऋते ध्यानात् परं न हि ॥ ९४ ॥
साध्यो नारायणश्चैव विष्णुस्त्रिभुवनेश्वरः ।
भविष्यतीह नाम्ना तु वाराहो नाम विश्रुतः ॥ ९५ ॥
चतुर्बाहुश्चतुष्पादश्चतुर्नेत्रश्चतुर्मुखः ।
तदा संवत्सरो भूत्वा यज्ञरूपो भविष्यति ॥
षडङ्गश्च त्रिशीर्षश्च त्रिस्थानस्त्रिशरीरवान् ॥ ९६ ॥
कृतं त्रेता द्वापरं च कलिश्चैव चतुर्युगम् ।
एतस्य पादाश्चत्वारः अङ्गानि क्रतवस्तथा ॥ ९७ ॥"

"स यदा कालरूपाभो वराहत्वे व्यवस्थितः ।
भविष्यति यदा साध्यो विष्णुर्नारायणः प्रभुः ॥ १०० ॥
तदा त्वमपि देवेश चतुर्वक्त्रो भविष्यसि ।
ब्रह्मलोकनमस्कार्यो विष्णुर्नारायणः प्रभुः ॥ १०१ ॥
एकार्णवे प्लवे चैव शयानं पुरुषं हरिम् ।
यदा द्रक्ष्यसि देवेशं ध्यानयुक्तं महामुनिम् ॥ १०२ ॥
तदावां मम योगेन मोहितौ नष्टचेतसौ ।
अन्योन्यस्पर्द्धिनौ राचावविज्ञाय परस्परम् ॥ १०३ ॥
एकैकस्योदरस्थांस्तु दृष्ट्वा लोकांश्चराचरान् ।
विस्मयं परमं गत्वा ध्यानाद् बुद्ध्वा तु मानुषौ ॥ १०४ ॥
ततस्त्वं पद्मसम्भूतः पद्मनाभः सनातनः ।
पद्माङ्कितस्तदा कल्पे ख्यातिं यास्यसि पुष्कलाम् ॥ १०५ ॥
ततस्तस्मिन् तदा कल्पे वाराहे सप्तमे प्रभो ।
पुनर्विष्णुर्महातेजाः कालो लोकप्रकाशनः ॥
मनुर्वैवस्वतो नाम तव पुत्रो भविष्यति ॥ १०६ ॥

तदा चतुर्युगावस्थे कल्पे तस्मिन् युगान्तके ।
भविष्यामि शिखायुक्तः श्वेतो नाम महामुनिः ॥ १०७ ॥
हिमवच्छिखरे रम्ये छागले पर्वतोत्तमे ।
चतुः शिष्याः शिवे युक्ता भविष्यन्ति तदा मम ॥ १०८ ॥
श्वेतश्चैव शिखश्चैव श्वेताश्वः श्वेतलोहितः ।
चत्वारस्ते महात्मानो ब्राह्मणा वेदपारगाः ॥ १०९ ॥
ततस्ते ब्रह्मभूयिष्ठा दृष्ट्वा ब्रह्मगतिं पराम् ।
मत्समीपं गमिष्यन्ति पुनरावृत्तिदुर्लभम् ॥ ११० ॥
पुनस्तु मम देवेशो द्वितीयद्वापरे प्रभुः ।
प्रजापतिर्यदा व्यासः सत्यो नाम भविष्यति ॥ १११ ॥
तदा लोकहितार्थाय सुतारो नाम नामतः ।
भविष्यामि कलौ तस्मिन् लोकानुग्रहकारणात् ॥ ११२ ॥
तत्रापि मम ते पुत्रा भविष्या नाम नामतः ।
दुन्दुभिः शतरूपश्च ऋचीकः क्रतुमांस्तथा ॥ ११३ ॥ ” इत्यादि

ततः परम् ।

“ परिवर्ते पुनः षष्ठे मृत्युर्व्यासो यदा विभुः ।
तदाप्यहं भविष्यामि लोकाक्षिर्नाम नामतः ॥ १२४ ॥
शिष्याश्च मम ते दिव्या योगात्मानो दृढव्रताः ।
भविष्यन्ति महाभागाश्चत्वारो लोकसम्मताः ॥ १२५ ॥
सुधामा विरजश्चैव शङ्खपाद्रव एव च । ” इत्यादि ।

ततः परम् ।

“ षड्विंशे परिवर्ते तु यदा व्यासः पराशरः ।
तदाप्यहं भविष्यामि सहिष्णुर्नाम नामतः ॥
पुण्यं रुद्रवटं प्राप्य कलौ तस्मिन् युगान्तके ॥ १९९ ॥
तत्रापि मम ते पुत्रा भविष्यन्ति सुधार्मिकाः ।
उलूको वैद्युतश्चैव सर्वको ह्याश्वलायनः ॥
प्राप्य माहेश्वरं योगं गन्तारस्ते तथैव हि ॥ २०० ॥

सप्तविंशतिमे प्राप्ते परिवर्ते क्रमागते ।
जातूकर्ण्यो यदा व्यासो भविष्यति तपोधनः ॥ २०१ ॥
तदाप्यहं भविष्यामि सोमशर्मा द्विजोत्तमः ।
प्रभासतीर्थमासाद्य योगात्मा लोकविश्रुतः ॥ २०२ ॥
तत्रापि मम ते पुत्रा भविष्यन्ति तपोधनाः ।
अक्षपादः कणादश्च उलूको वत्स एव च ॥ २०३ ॥
योगात्मानो महात्मानो विमलाः शुद्धबुद्धयः ।
प्राप्य माहेश्वरं योगं रुद्रलोकं ततो गताः ॥ २०४ ॥" इत्यादि ।

अत्र १०८ श्लोके "चतुःशिष्या भविष्यन्ती"ति पुनः १२५ श्लोके "शिष्याश्च मम ते दिव्या" इत्युक्त्या २०३ श्लोके ऽपि "तत्रापि मम ते पुत्रा भविष्यन्तीत्युक्त्या शिष्येष्वेव पुत्रत्वोपचारो बोध्यः(१)। अन्यथा मत्स्यपुराणादौ अक्षपादस्याङ्गिरसगोत्रे उशिजादुत्पत्तिः(२) उक्तरीत्या कणादस्य कश्यपगोत्रे उलूकादुत्पत्ति(३)श्च विरुद्धा स्यात् । पुत्रत्वोपचारादेव पद्मपुराणोत्तरखण्डस्था पार्वतीं प्रति शिवोक्तिः सङ्गच्छते । तथाहि ।

"प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम् ।
मच्छक्त्यावेशितैर्विप्रैः सम्प्रोक्तानि ततः परम् ॥
कणादेन तु सम्प्रोक्तं शास्त्रं वैशेषिकं महत् ।
गोतमेन तथा न्यायं सांख्यं तु कपिलेन वै ॥" इत्यादि

(१) संख्या वंश्येन २ अ० १ पा० १९ सू० । विद्यया जन्मना वा प्राणिनामेकलक्षणसन्तानो वंश इत्यभिधीयते इति काशिकायाम् । मिताक्षरायामाचाराध्याये "उपायः सामदानं चे"ति याज्ञवल्क्यस्मृतिव्याख्याने ।

"अधीष्व पुत्रकाधीष्व दास्यामि तव मोदकान् ।
यद्वान्यस्मै प्रदास्यामि कर्णमुत्पाटयामि ते ॥" इति ।
"उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ।" इति तत्त्वचिन्तामणौ ।

(२) मत्स्यपुराणे ४८ अध्याये उशिजान्महर्षेः ममतायां बृहस्पतिशापात् दीर्घतमा नामर्षिरभूत् सुरभेरनुग्रहात् स एव गोमतः सञ्जातः । "नैयायिकस्त्वक्षपाद"इत्यमरकोशे । 'नैयायिकः अक्षपादः आक्षपादो वा द्वे प्रमाणप्रमेयसंशयेत्यादिषोडशपदार्थवादिनः गोतमस्य' इति तद्व्याख्यातारः ।

(३) अत्र वायुपुराणे ऽपि षड्विंशे परिवर्ते उलूकस्य स्थितिरासीदिति निरूपितम् सप्तविंशतिमे परिवर्ते कणादस्येति न किमपि विरुद्धम् । किन्तु २०० श्लोके षड्विंशपरिवर्ते उलूकनामकीर्तनं पुनरपि २०३ श्लोके सप्तविंशपरिवर्ते ऽपि उलूकनामदर्शनात् सन्दिहानो वायुपुराणस्यैकस्मिन् प्राचीनपुस्तके "औलूक" इत्युपलब्धवान् अस्यापि पाठस्य "कण्वादिभ्यो गोत्रे (४ अ० २ पा० १११ सू०) इत्यनेनाणुप्रत्यये कृते ततो यञो लुक् औलूक्यच्छात्रे वैशेषिकमताभिज्ञे ऋष्यन्तरे सम्भवाच्च पूर्वापरविरोधो न च द्विरुक्तिशङ्कापि । इदानींतनलिप्यां यथा नकारतकारयोः स्वल्पमेवान्तरं तथा प्राचीनलिप्याम् उकारौकारयोरपि स्वल्पमेवान्तरमिति लेखकप्रमादादुलूकः क्वचिच्चौलूक इति यद्युभयत्र उलूक एवेत्यत्राग्रहस्तदा प्रथमः काश्यपः द्वितीयस्तु भारतानुरोधाद्वैश्वामित्र इति सर्वं समञ्जसम् । एतेन वायुपुराणस्यासङ्गतत्वमुद्भावयतां शङ्का परास्ता ।

एवं देवीभागवते श्रीमद्भागवतेऽपि तत्र तत्र कणादमहर्षेर्नामसङ्कीर्तनाच्चिरन्तनत्वं तस्य नैव तिरोहितमस्ति विदुषाम् ।

प्रशस्तपादभाष्ये ऽन्ते ।

"योगाचारविभूत्या यस्तोषयित्वा महेश्वरम् ।
चक्रे वैशेषिकं शास्त्रं तस्मै कणभुजे नमः ॥"

एवमेव मुदयनाचार्यशङ्करमिश्रादयोऽपि तत्तद्ग्रन्थारम्भे प्रतिपादितवन्तः ।

अत एव राजशेखरेणाप्युक्तं न्यायकन्दलीटीकायाम्[1] ।

"इह किल पूर्वमजिह्मब्रह्माभ्यासदूरीकृतप्रमादाय मुनये कणादाय स्वयमीश्वर उलूकरूपधारी[2] प्रत्यक्षीभूय द्रव्यगुणकर्मसामान्यविशेषसमवाय लक्षणं पदार्थषट्कमुपदिदेश । तदनु स महर्षिर्लोकानुकम्पया षट्पदार्थरहस्यप्रपञ्चनपराणि सूत्राणि रचयाञ्चकार" । इत्यादि

ये च काणादसूत्र[3]दशाध्याय्यां पाठभेदाः सूत्रभेदा न्यूनाधिकभावाश्चोपलभ्यन्ते ते व्याख्याकाराणां मतभेदा[4]ल्लेखकशोधकप्रमादात् सञ्जाता

---

(१) पिटर्सन्साहबमहाशयसंकलिते रायल्एशियाटिक्सोसाइटीसमाख्यसभाशाखाद्वारा १८८७ ईशवीयवर्षे मुद्रिते रिपोर्टपुस्तके २७३ पृष्ठे ऽवलोकनीयम् । (२) अत्र मूलं मृग्यम् ।

(३) सूत्रलक्षणं पराशरोपपुराणे १८ अध्याये ।

"स्वल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥" इति ।

वाचस्पतिमिश्रास्तु भामत्यां १ अ॰ १ पा॰ १ सू॰ व्याख्याने ।

"लघूनि सूचितार्थानि स्वल्पाक्षरपदान्यपि ।
सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः ॥" इति ।

(४) सूत्रपाठस्यैकं प्रायःशुद्धं पुरातनं पुस्तकमस्मन्निकटे वर्तते । जीर्णत्वाद्याकारेणानुमीयते वर्षाणां चतुःशत्याः पूर्वं लिखितमिति । तस्यान्तिमपत्रे विभिन्नलेखकेन विभिन्नलेखन्या लिखितमिदं पद्यमस्ति ।

"श्रीमत्काश्यपगोत्रसम्भवमहानागेशभट्टात्मजः
गोपीनाथविपश्चिदाद्यतनयं प्रासूत यं रुक्मिणी ।
नानाशास्त्रमहाटवीषु विबुधद्वीपेन्द्रपञ्चाननः
श्रीसत्पण्डितरामचन्द्र अधुना काश्यां जयत्युद्भटः ॥"

अस्मिन् पुस्तके उदयनाचार्यश्रीधराचार्यादिभिरुद्धृताना "मस्मद्बुद्धिभ्यो लिङ्गमृषे"रित्यादिसूत्राणां दर्शनादिदं प्रामाणिकत्वेनावधृतम् । उदयनाचार्येण किरणावल्यामनुमाने शब्दान्तर्भावप्रकरणे श्रीधराचार्येण च न्यायकन्दल्यां २१६ पृ॰ १९ पं॰ उक्तसूत्रं समुद्धृतम् । अपरमपि सूत्रपाठपुस्तकं वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तकालये वर्तते । अस्माभिः तदनुसारेण सूत्रपाठभेदादयः प्रदर्शिताः ते च बनारससंस्कृतसीरीजमुद्रितकिरणावलीपुस्तकस्य प्रथमखण्डे द्रष्टव्याः ।

"सूत्रमात्रावलम्बेन निरालम्बे ऽपि गच्छत" इत्याद्युक्तवता शङ्करमिश्रेण तु "अस्मद्बुद्धिभ्यो लिङ्गमृषे"रित्येवमादीनि सूत्राणि परित्यक्तान्येव क्वचिच्चैकमेव सूत्रं सूत्रद्वयात्मना क्वचित्सूत्रद्वयमेकसूत्रात्मना कल्पितम् सूत्रान्तरेषु पाठवैपरीत्यं च कृतम् ।

इत्यनुमीयते। रावणभाष्यस्य(१) भारद्वाजवृत्तेश्च(२) विलुप्तप्रायतया न ताभ्यां सूत्रपाठभेदादिनिर्णयो भवितुमर्हति। भगवान् प्रशस्तपादश्च सर्वाणि सूत्राण्येकदैव मनसि निधाय तानि व्याचिख्यासुरवतरणप्रतीकादिधारणं विनैव सूत्रोक्तार्थबोधकं भाष्यं(३) प्रणीतवानिति तद्द्वारापि सूत्रपाठभेदादिनिर्णयो न सम्भवति। तदनायत्या विद्वद्वरशङ्करमिश्रकृतवैशेषिकसूत्रोपस्कारेणैवेदानीं सूत्राणां पठनपाठनप्रचारस्तदभावे सूत्राणां योजनासम्भवो भवेदिति॥

तत्र तावद्भगवतो भाष्यकारस्य प्रशस्तपादस्यापि कस्मिन् काले कस्मिन् देशे आविर्भाव इति सम्यङ्निश्चयो न भवति तथापि यथा चिरन्तनत्वं तथोच्यते।

सृष्टिसंहारविधौ "वृत्तिलब्धादृष्टापेक्षेभ्य" इति भाष्यम्(४)। अस्य टीकायां किरणावल्यां "लब्धवृत्तयश्च ये अदृष्टविशेषा" इत्युदयना-

---

श्रीगङ्गाधरकविरत्नकविराजकृतभारद्वाजवृत्तिभाष्यपुस्तके तु सूत्रेषु पाठभेदादयो वर्तन्त एव किन्तु अध्यायाह्निकक्रमवैषम्यमपि वर्तत इति तत्र मूलं मृग्यम्।

| निरुक्तप्राचीनपुस्तके सूत्रसंख्या | उपस्कारसंवलितमुद्रितपुस्तके सूत्रसंख्या |
|---|---|
| प्रथमाध्याये ५० | प्रथमाध्याये ४८ |
| द्वितीयाध्याये ६४ | द्वितीयाध्याये ६८ |
| तृतीयाध्याये ३७ | तृतीयाध्याये ४० |
| चतुर्थाध्याये २५ | चतुर्थाध्याये २४ |
| पञ्चमाध्याये ४३ | पञ्चमाध्याये ४४ |
| षष्ठाध्याये ३० | षष्ठाध्याये ३२ |
| सप्तमाध्याये ४६ | सप्तमाध्याये ५३ |
| अष्टमाध्याये १७ | अष्टमाध्याये १७ |
| नवमाध्याये २८ | नवमाध्याये २८ |
| दशमाध्याये १५ | दशमाध्याये १६ |

(१) पद्मनाभमिश्रेण किरणावलीभास्करे प्रणम्य हेतुमीश्वरमिति श्लोकव्याख्याने भाष्यस्य च विस्तरत्वादित्यत्र "भाष्यस्य रावणप्रणीतस्ये"ति व्याख्यातम्। बनारससंस्कृतसीरीजमुद्रितकिरणावलीभूमिकायां पृ॰ १२ पं॰ १० द्रष्टव्यम्।

अपि च शाङ्करब्रह्मसूत्रभाष्यटीकायां रत्नप्रभायां २ अ॰ २ पा॰ ११ सू॰ व्याख्याने प्रतिपादितम्। "प्रकटार्थकारास्तु यत् द्वाभ्यां द्व्यणुकाभ्यामारब्धकार्ये महत्त्वं दृश्यते तस्य हेतुः प्रचयो नाम प्रशिथिलावयवसंयोग इति रावणप्रणीते भाष्ये दृश्यत इति चिरन्तनवैशेषिकदृष्ट्येदं भाष्यमित्याहु"रिति।

(२) वाराणस्यामेकस्य संन्यासिनो निकटे तालपत्रेषु मैथिलाक्षरैर्लिखितं जीर्णत्वात् समन्ताच्छिन्नं भारद्वाजवृत्तिपुस्तकं वर्तते तत्र पत्राङ्कानामपि छिन्नत्वात् किं केन पत्रेण संयोज्यमित्यपि कर्तुमशक्यम् प्रारम्भपत्रस्य प्रथमपृष्ठे "वैशेषिकसूत्रवृत्तिर्भारद्वाजीया" इति लेखदर्शनात् यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म इति सूत्रव्याख्याने शङ्करमिश्रैर्निरूपितस्य "वृत्तिकृतस्त्व"-त्यादिलेखस्य दर्शनात् सैवेयं वृत्तिरिति निर्णीतम्।

(३) अस्य यथा भाष्यत्वं तथानुपदमेव प्रपञ्चयिष्यामः।

(४) न्यायकन्दल्याम् ४८ पृ॰ २० पं॰।

चार्यैर्व्याख्यातम् । किरणावलीभास्करे च "पूर्वप्रयोगानुरोधेनाह । लब्धवृत्तय इति । भाष्यं त्वार्षमिति भावः" इति पद्मनाभमिश्रैर्व्याख्यातम्(१) ।

श्रीधराचार्यैश्च न्यायकन्दल्यां १२० पृ. ६ पं. "तत्र मुनिर्बध्यघातकपक्षपरिग्रहं कुर्वन्नाह । शोभनमेतद्विधानमिति ।" २६७ पृ. १ पं. "मुनिः प्राह"(२)॥

अपि च "प्रवरैर्ये समाख्याता ऋषयस्त इति श्रुतिः । तत्पुत्रपौत्रनप्तार ऋषिपुत्रा इति स्मृताः ।" इत्याद्युक्तमधस्तात् । तथा च बोधायनसूत्रे प्रवराध्याये आङ्गिरसगणे गौतमवर्गे औशनससंग्रहे प्रशस्तस्य नाम पठितम्(३) । "प्रशस्तस्याभवन् पञ्च पुत्राः सर्वे तपोधनाः ।" इति शिवरहस्ये ऽपि भक्तिप्रशंसायामुक्तम् । न्यायकन्दल्यामपि २ पृ. २४ पं. "प्रशस्तकृतोपनिबन्धे ऽपि" इत्यादि । तथा गुणग्रन्थान्ते २८६ पृ. २२ पं. "तेनास्माभिरिह भाष्यतात्पर्यमात्रं व्याख्यातम् ।" अत एव न्यायकन्दल्या द्वितीयचतुर्थादर्शपुस्तकान्ते ।

"कणादकृतमूलदृब्धा प्रशस्तभाष्यद्रुमावबद्धा च ।
श्रीधरहृदयोपवने विलसन्ती न्यायकन्दली रम्या ॥" इति

"प्रशस्ताचार्यास्तु सिद्धदर्शनं न ज्ञानान्तरमित्याहु"रिति वैशेषिकसूत्रोपस्कारे (६ अ. २ आ. १३ सू.) शङ्करमिश्राः । एतेन "प्रशस्त" इति भाष्यकारस्य मुख्यं नाम पाददेवादिशब्दस्त्वौपचारिकः । विस्तरस्तु वनारससंस्कृतसीरीजमुद्रितकिरणावलीपुस्तके भूमिकायामनुसन्धेयः ।

एतेन सूत्रकारवदेव भाष्यकारस्यापि चिरन्तनत्वं सम्भवति ॥

यत्तु "इत्येतदस्मदादीनां प्रत्यक्षम् । अस्मद्विशिष्टानां तु योगिना"मित्यादि प्रशस्तपादभाष्यम्(४) तत्तु लौकिकाभिप्रायेण स्वभावोक्त्या बोध्यम् ।

अत एव "एतदस्मदादीनां प्रत्यक्षमिति । अस्मदादीनामयोगिना-

---

(१) व. सं. सी. मु. किरणा. ६३ पृ. २२ पं. । आर्षम् ऋषेरिदम् अण् । ऋषिप्रणीतमिति यावत् ।

(२) "मुनिर्मिति शुद्धात्मज्ञानप्रदीपक्षपिततमससमत्युग्रतपसं साक्षादशेषतत्त्वावबोधयुक्तं जीवन्मुक्तं पुरुषविशेषमाह । इत्थंभूत एवार्थे मुनिशब्दस्य लोके दर्शनात्" न्यायकन्दल्याम् २ पृ. ११ पं. ।

(३) "आङ्गिरसान् व्याख्यास्याम" इत्यादि । ततः "औशनसा दिश्याः प्रशस्ताः सुरूपाक्षा महोदरा विकंहताः सुबुद्धा निहता इत्येते औशनसाः । तेषां त्र्यार्षेयः प्रवरो भवति आङ्गिरसगौतमौशनस इति ।" इत्यादि तत्प्रवराध्याये द्रष्टव्यम् ।

(४) न्यायकन्दल्याम् १८७ पृ. ६ पं. ।

मित्यर्थः । योगिप्रत्यक्षमाह । अस्मद्विशिष्टानां त्विति ।" इति न्यायकन्दल्यां[१] श्रीधराचार्याः ।

"इत्येतदिति । अयोगिनां प्रत्यक्षमित्यर्थः । योगिप्रत्यक्षमाह । अस्मद्विशिष्टानामिति । अस्य विवरणं योगिनामिति । ध्यानिनामित्यर्थः ।" इत्युदयनाचार्याः किरणावल्याम् ।

गुरुशिष्यसंवादात्मकस्य शास्त्रस्य[२] लौकिकाभिप्रायेण स्वभावोक्त्या प्रणयनादेव "अतीन्द्रियो बुद्ध्यानुमेयः समवाय" इति भाष्यं सङ्गच्छते । अन्यथा "मनसा स्वात्मान्तराकाशदिक्कालपरमाणुवायुमनःसु तत्समवेतेषु गुणकर्मसामान्यविशेषेषु समवाये चाऽवितथं स्वरूपदर्शनमुत्पद्यते[३]" इति पूर्वभाष्येण विरोधात् वदतो व्याघातः स्यादिति ॥

यदि च सर्वकालावच्छेदेन सर्वदेशावच्छेदेन वा सकलार्थवेतृत्वमेव मुनित्वमृषित्वं देवत्वं चेत्यत्राग्रहस्तदा "सञ्ज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम्" (२ अ. १ आ. १८ सू.) "अस्मद्बुद्धिभ्यो लिङ्गमृषे"[४]रित्यादिसूत्रैः कणादस्यापि ऋषित्वं साधारणविशिष्टभावोऽपि न स्यात् । अपि च अध्यात्मरामायणे बालकाण्डे प्रथमे ऽध्याये ब्रह्मनारदसंवादे ।

"तमुपायमुपाख्याहि सर्वं वेत्ति यतो भवान् ।
इत्यृषेर्वाक्यमाकर्ण्य प्रत्युवाचाम्बुजासनः ॥ १० ॥"
"श्रीरामगीतामाहात्म्यं कृत्स्नं जानाति शङ्करः ।
तदर्द्धं गिरिजा वेत्ति तदर्द्धं वेद्म्यहं मुने ॥ ४६ ॥
तत्ते किञ्चित् प्रवक्ष्यामि कृत्स्नं वक्तुं न शक्यते ।
यज्ज्ञात्वा तत्क्षणाल्लोकश्चित्तशुद्धिमवाप्नुयात् ॥ ४७ ॥"

इत्यादि वदतो ब्रह्मणोऽपि सर्वज्ञत्वं देवत्वं च न स्यादित्यलं पल्लवितेन ॥

सम्प्रति कथमस्य ग्रन्थस्य भाष्यत्वमिति विचारः प्रस्तूयते ।

---

(१) न्यायकन्दल्याम् १६५ पृ. १८ पं. ।

(२) "अनेनैव न्यायेन सर्वत्र पदार्थे ऽन्यदपि साधर्म्यं स्वयं वाच्यम् विपर्ययादितरव्यावृत्तेर्वैधर्म्यं वाच्यमिति शिष्यानाह । एवमिति ।" न्यायकन्दल्याम् । २६ पृ. ११ पं. ॥

(३) न्यायकन्दल्याम् १८७ पृ. ८ पं. ।

(४) न्यायकन्दल्याम् २१६ पृ. १९ पं. । निरुक्तप्राचीनसूत्रपाठपुस्तके १० अ. २ आ. ९ सू. ।

आधुनिकवैशेषिकास्तु वदन्ति "प्रशस्तपादाचार्यकृतं पदार्थधर्मसंग्रहमस्य ( वैशेषिकदर्शनस्य ) भाष्यतया केचिद्व्यवहरन्ति। तदसङ्गत"मिति। इयं हि तेषां भाष्यव्यवहारासङ्गतत्वसाधिका बलवती युक्तिः "सूत्रार्थो वर्ण्यते येन[1] पदैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः । इति भाष्यलक्षणस्य तत्रानुपलम्भात् ।" "तस्मान्नासौ भाष्यमिति स्फुटम् । प्रशस्तपादाचार्योऽपि स्वनिर्मितं ग्रन्थं संग्रहरूपतयैव निर्दिदेश न भाष्यतया तथा च तस्याद्यः श्लोकः । प्रणम्य हेतुमीश्वरं मुनिं कणादमादरात्[2] । पदार्थधर्मसंग्रहः प्रवक्ष्यते महोदयः ॥" "सूत्रेषु वैशद्याभावात् भाष्यस्य च विस्तरत्वा"दित्यादि ॥

तेषामयमाशयः अन्येषां भाष्याणां विस्तीर्णत्वात् अस्य लघुत्वे भाष्यत्वं न संभवति लघुत्वेन भाष्यत्वेन च विरोधादिति ।

अत्र समालोचयामः । आद्यश्लोकेन पदार्थधर्मसंग्रहोऽयं न भाष्यमिति तु निर्णीतम्। प्रशस्तपादाचार्येणायं रचित इति कस्मादवगतम्? आद्यश्लोके तस्यानुपलम्भात् । यदि च "इति प्रशस्तपादाचार्यविरचितं द्रव्यादिपदार्थषट्कभाष्यं[3] समाप्त"मिति ग्रन्थान्तिमपङ्क्त्या ग्रन्थान्तरेण वा प्रशस्तपादाचार्यप्रणीत इत्युच्यते तदा अन्तिमपङ्क्तौ भाष्यत्वोल्लेखात् कन्दलीकारादिभिः[4] चित्सुखाचार्यादिभिश्च[5] भाष्यत्वेनावधारितत्वात् कथमस्य भाष्यत्वं तिरोहितं कुर्वन्त्याधुनिकवैशेषिकाः ।

अपि च "स्वनिर्मितं ग्रन्थं संग्रहरूपतयैव निर्दिदेश न भाष्यतया" इत्यत्रापि

---

(१) सूत्रार्थो वर्ण्यते यत्र-इति पाठः पराशरोपपुराणे ।

(२) मुनिं कणादमन्वतः-इति पाठ उदयनाचार्यादिभिर्व्याख्यात इत्यग्रे प्रदर्शयिष्यामः ।

(३) "तेषु सूत्रेषु प्रशस्तकरदेवो भाष्य"मित्याद्युक्तं राजशेखरेण। पिटरसनमहाशयसङ्कलिते निर्दिष्टरिपोर्टपुस्तके द्रष्टव्यम् । क्वचित् पदार्थोद्देशः क्वचिच्च पदार्थप्रवेश इति तत्र मूलं मृग्यम् ।

(४) न्यायकन्दल्यां गुणग्रन्थान्ते २८६ पृ· २२ "तेनास्माभिरिह भाष्यतात्पर्यमात्रं व्याख्यातम् ।" एवं शङ्करमिश्राः कणादरहस्ये "प्रशस्तदेवाचार्यभाष्यव्याख्याच्छलेन कणादरहस्यं व्याख्यास्यामः ।" गुणप्रकाशविवृत्तौ च "यावदवयवकर्मनियतमित्यन्ये। वक्ष्यति च भाष्यकारो विभागग्रन्थे" इति दीधितिकृतः। एवमनेकत्र। जगदीशभट्टाचार्याः भाष्यसूक्तौ । महादेवभट्टा मुक्तावलीप्रकाशे वायुग्रन्थे प्राणादिरित्युक्तमाकरे इति मुक्तावलीग्रन्थव्याख्याने "आकरे प्रशस्तपादभाष्यादौ" इति ।

(५) चित्सुख्यां द्वितीयपरिच्छेदे चतुर्थकारिकाव्याख्याने "गुणादीनां पञ्चानामपि निर्गुणत्वनिष्क्रियत्वे इति प्रशस्तपादभाष्यदर्शनात् ।" एवमग्रेऽपि ॥

जैनेष्वपि राजशेखरो न्यायकन्दलीटीकायाम् । चरित्रसिंहगणयादयोऽपि तत्तद्ग्रन्थे भाष्यत्वेनैवोद्धृतवन्तः ।

"यदक्षपादः प्रवरो मुनीनां शमाय शास्त्रं जगतो जगाद ।
कुतार्किकाज्ञाननिवृत्तिहेतुः करिष्यते तस्य मया निबन्धः ॥"

इत्युद्द्योतकराचार्यैरुक्तत्वात्(१) तस्य वार्त्तिकत्वाभावे न्यायवार्त्तिकतात्पर्यटीकास्माभिर्विधास्यते(२) इत्याचार्यवाचस्पतिमिश्राणामुक्तेरुन्मत्तप्रलापत्वापत्तिः । अपि च महाभाष्यारम्भे "अथ शब्दानुशासन"मिति पतञ्जलिमहर्षिभिरुक्तत्वात् भाष्यत्वाभावे "महाभाष्यार्णवावारपारीण"मिति भाष्यप्रदीपारम्भे कैयटोक्तेः(३) "पातञ्जले महाभाष्ये कृतभूरिपरिश्रम" इति नागेशभट्टोक्तेरपि(४) उन्मत्तप्रलापत्वापत्तिश्च ॥

उदयनाचार्येण किरणावल्याम् "सूत्रेषु वैशद्याभावात् भाष्यस्य च विस्तरत्वा"दिति यथोक्तम् तथाऽनुपदमेव "प्रकरणादीनां चैकदेशत्वादि"त्य(५)प्युक्तम् । तस्मान्नेदं प्रकरणम् किन्तु संपूर्णं शास्त्रम् ।

अत एव "शास्त्रारम्भे सदाचारपरिप्राप्तया"इति(६) किरणावली, "शास्त्रारम्भे ऽभिमतां देवता"मित्यादिन्यायकन्दली(७) "तस्याप्रवृत्तौ च शास्त्रं कृतमकृतं स्यात् अतः शास्त्रारम्भमादधानः प्रेक्षावत्प्रवृत्त्यङ्गं तस्य सम्बन्धं प्रयोजनं चादौ श्लोकस्योत्तरार्द्धेन कथयति । पदार्थधर्मे"तीत्यादि(८)कन्दलीग्रन्थश्च सङ्गच्छते ॥

इत्थमस्य पदार्थधर्मसंग्रहाभिधस्य भाष्यत्वे आचार्यैरवधारिते ।

"सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥"(९)

इति भाष्यलक्षणस्य समन्वयो भवितुमर्हति । तथाहि । "सूत्रार्थो वर्ण्यते यत्र" अस्य समन्वये यथाह उदयनाचार्यः किरणावल्याम्(१०) "एतेन सौत्रमप्यतःपदं(११) व्याख्यातम्" । "एतेनाथातो धर्मं व्याख्यास्यामः ।

---

(१) न्यायवार्त्तिकारम्भश्लोकः । (२) न्यायवार्त्तिकतात्पर्यटीकारम्भे ।

(३) महाभाष्येति । व्याख्यातृत्वे ऽप्यस्येष्ट्यादिकथनेनान्वाख्यातृत्वादितरभाष्यवैलक्षण्येन महत्त्व"मिति भाष्यप्रदीपोद्द्योते नागेशभट्टाः । (४) शब्देन्दुशेखरारम्भे ।

(५) बनारससंस्कृतसीरीजमुद्रितपुस्तके ५ पृ० १६ पं० । यत्तु "शास्त्रे नानास्थानेषु वितता एकत्र सङ्कलय्य कथ्यन्ते इति सङ्ग्रह" इत्युक्तम् तदर्थस्तु सौत्रक्रममनादृत्य पदार्थक्रमेणैव सूत्रोक्तार्थबोधकं संग्रहरूपं भाष्यं प्रणीतवानिति वर्णयन्ति तद्व्याख्यातारः ॥

(६) ब० सं० सी० पु० ३ पृ० ७ पं० । (७) न्यायकन्दल्यारम्भे ।

(८) न्यायकन्दल्याम् ३ पृ० ७ पं० । (९) पराशरोपपुराणे १८ अध्याये ।

(१०) ब० सं० सी० मु० ५ पृ० ६ पं० । (११) अथातो धर्मं व्याख्यास्याम इति सूत्रस्थम् ।

यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः । तद्वचनादाम्नायप्रामाण्यमिति" त्रिसूत्री व्याख्याता(१) । "एते च गुणविनिवेशाधिकारे रूपादयो गुणविशेषाः सिद्धाः" इति भाष्यम्(२) "गुणविनिवेशाधिकारो द्वितीयोऽध्यायः । तथा च सूत्रम्" इति किरणावल्याम्(३) ॥

न्यायकन्दल्याम् "नायं सूत्रार्थः । तमेवार्थं दर्शयति । शब्दे विशेषदर्शनादित्यादिना"(४) । "सूत्रार्थे सूत्रकारानुमतिं दर्शयति । तथा चाहेत्यादिना"(५) ॥

एवं किरणावल्याम् न्यायकन्दल्यामपि तत्र तत्र पदार्थनिरूपणे भाष्यमूलानि सूत्राणि श्रीधरोदयनाचार्यादिभिरुद्धृतानि । अस्माभिश्चाग्रे प्रदर्शयिष्यते ॥

न च सकलसूत्राणामचोक्तरूपेण व्याख्यानानुपलम्भान्नेदं भाष्यमिति वाच्यम् महाभाष्ये महर्षिणा पतञ्जलिना सर्वाणि सूत्राण्यव्याख्यातानीति तस्य महत्त्वं तु दूरे गतम् भाष्यत्वमेवानुपपन्नं स्यादिति ॥

ननु लघूनि सूचितार्थानीत्यादिसमस्तस्य सूत्रलक्षणस्य प्रत्येकसूत्रेषु समन्वय इव सूत्रार्थो वर्ण्यते यत्रेत्यादिसमस्तस्य भाष्यलक्षणस्य प्रत्येकसूत्रभाष्येषु समन्वयाभावान्नेदं भाष्यमिति चेन्न । उक्तदोषतादवस्थ्यात्(६) समस्तस्य लक्षणत्वे पदैः सूत्रानुसारिभिरित्यस्यान्वयः सूत्रार्थो वर्ण्यते यत्रेत्यनेन सह वा स्वपदानि च वर्ण्यन्ते इत्यनेन वेति विकल्पोत्थानाच्चेति सूत्राण्याहुरितिवत् भाष्यं भाष्यविदो विदुरित्यत्र बहुवचनानुपलम्भात् यथासम्भवमेव समन्वयः कार्य इति न काप्यनुपपत्तिः ॥

यदि च सूत्रार्थो वर्ण्यते यत्रेत्यस्य सूत्रव्याख्यानात्मकं भाष्यं भवतीत्यर्थः । तथा च पराशरोपपुराणे १८ अध्याये ।

"पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना ।
आक्षेपेषु समाधानं व्याख्यानं पञ्चलक्षणम्" ॥

---

(१) प्रथमाध्याये प्रथमाह्निके आदावेवेयं त्रिसूत्री । बनारससंस्कृतसीरीजमुद्रितकिरणावलीपुस्तके १३ पृ॰ ७ पं॰ । (२) ब॰ सं॰ सी॰ पु॰ ४४ पृ॰ २ पं॰ ।

(३) ब॰ सं॰ सी॰ मु॰ किरणा॰ ४४ पृ॰ १७ पं॰ ।

(४) न्यायकन्दल्याम् २४५ पृ॰ १० पं॰ ।

(५) न्यायकन्दल्याम् १२१ पृ॰ ५ पं॰ । मया कृतः सूत्रार्थः साधुरेवेति तस्मिन्नर्थे सूत्रकारानुमतिं दर्शयति भाष्यकारः । (६) महाभाष्येऽपि तथा समन्वयो न सम्भवतीति भावः ॥

इत्यनेन पदार्थोक्तेरपि व्याख्यानत्वान्निरुक्तग्रन्थस्य सूत्रोक्तपदार्थोक्त्यापि भाष्यत्वम्। अत्र पदच्छेदादिः प्रत्येकमपि लक्षणम्। अन्यथा ऐतिह्यप्रमाणसिद्धस्य पदच्छेदरूपस्य रावणभाष्यस्य(१) भाष्यत्वानुपपत्तेः। गौडपादाचार्यप्रणीतस्य कारिकारूपस्य सूत्रसारार्थप्रतिपादकस्य ब्रह्मसूत्रभाष्यस्य(२)भाष्यत्वानुपपत्तेश्च॥

"पदैः सूत्रानुसारिभिः" अस्य समन्वये "रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः" इति काणादसूत्रम् (१ अ॰ १ आ॰ ६ सू॰) अस्य भाष्यम् "गुणाः रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धि-सुखदुःखेच्छाद्वेषप्रयत्नाश्चेति कण्ठोक्ताः सप्तदश चशब्दसमुच्चिताश्च गुरुत्वद्र-वत्वस्नेहसंस्कारादृष्टशब्दाः सप्तैवेत्येवं चतुर्विंशतिगुणाः" (१० पृ॰ ११ पं॰)।

अपि च संयोगनिरूपणे भाष्ये (१४० पृ॰ २० पं॰) "यथा चतुर्विधं परिमाणमुत्पाद्यमुक्त्वाह नित्यं परिमण्डल(३)मित्येवमन्यतरकर्मजादिसंयोग-मुत्पाद्यमुक्त्वा पृथङ्नित्यं ब्रूयान्न त्वेवमब्रवीत् तस्मान्नास्त्यजः संयोग इति।"

अनुमानप्रकरणे च भाष्ये (२०४ पृ॰ २४ पं॰) "यत्तु यथोक्तात् त्रिरूपा-ल्लिङ्गादेकेन धर्मेण द्वाभ्यां वा विपरीतं तदनुमेयस्याधिगमे लिङ्गं न भवती-

---

(१) केचित्तु।

"जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः।
अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः॥
पदच्छेदादिना वेदा व्याख्याता रावणादिभिः।
यास्कादिभिर्निरुक्ताद्यैरङ्गैर्नीताश्च साङ्गताम्॥"

इति पद्यद्वयं देवीपुराणनाम्ना पठन्ति तन्मृग्यम्॥

सूर्यदेवज्ञास्तु स्वविरचितपरमार्थप्रपायां भगवद्गीताटीकायां यदाहुस्तद्यथा।

३ अध्याये १८ श्लोकव्याख्याने। अथोपक्रान्तऋक्शाखायामपि "हृदा तष्टेषु मनसो जवेषु यद् ब्राह्मणाः संजयन्ते सखायः अत्राह त्वं विजहुर्वेद्याभिरोहब्राह्मणा विचरन्त्युत्वे इमे"। इत्यादि। अत्र "रावणभाष्यम्-हृदा बुद्धिरूपेण मनसा तष्टेषु निराकृतेषु" इत्यादि।

अपि च। ५ अध्याये २८ श्लोकव्याख्याने। अथ निरूपितार्थविषये सर्वशाखोक्ताः श्रुतयश्च "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इत्यादि। अत्र रावणभाष्यम्। विष्णोर्व्यापनशील-स्यापि परमात्मनस्तत्परमं पारमार्थिकं पदमभिव्यक्तिस्थानम्" इत्यादि।

ग्रन्थान्ते च।

"विदित्वा वेदार्थं दशवदनवाणीपरिणतम्
शतश्लोकव्याख्यां परमरमणीयामकरवम्।
ततो गीताभाष्यं निखिलनिगमार्थैकनिलयम्
विधिज्ञार्यः सूर्यो नृहरिकरुणापाङ्गशरणः॥ ६॥"

(२) ग्रन्थोऽयं श्लोकसहस्रात्मको वाराणस्यां जगन्नाथपण्डितानां समीपे आसीत्।

(३) ७ अ॰ १ आ॰ २० सू॰।

त्येतदेवाह सूत्रकारः । अप्रसिद्धोऽनपदेशोऽसन् सन्दिग्धश्चानपदेशं इति" (३ अ. १ आ. १५ सू.) एवमन्यत्रापि ।

"स्वपदानि च वर्ण्यन्ते" अस्य समन्वयो यथा न्यायकन्दल्याम् २३१ पृ. २० पं. । "स्वोक्तं विवृणोति । पञ्चावयवेनैवेत्यादिना ।" २३४ पृ. १० पं. । "एतत् स्वयमेव विवृणोति । प्रतिपिपादयिषितेत्यादिना ।" २३७ पृ. २३ पं. । "अस्यार्थं कथयति । यदनुमेयेनेत्यादिना ।" २५६ पृ. १३ पं. । "स्वोक्तं संग्रह-वाक्यं विवृण्वन्निर्णयस्य प्रत्यक्षानुमानयोरन्तर्भावं दर्शयति । " एवमनेकत्र स्वयमेव स्वपदानि वर्णितानीति सर्वं समञ्जसम् ॥

राजशेखरजैनाचार्येण(१) न्यायकन्दलीटीकायां पञ्जिकाख्यायां वक्ष्य-माणप्रकारेण भाष्यटीकाकाराणां क्रमोऽवधारितः ।

"इह किल पूर्वमजिह्वब्रह्माभ्यासदूरीकृतप्रमादाय मुनये कणादाय स्व-यमीश्वर उलूकरूपधारी प्रत्यक्षीभूय द्रव्यगुणकर्मसामान्यविशेषसमवायलक्षणं पदार्थषट्कमुपदिदेश । तदनु स महर्षिर्लोकानुकम्पया षट्पदार्थरहस्यप्रपञ्च-नपराणि सूत्राणि रचयाञ्चकार । तेषु सूत्रेषु प्रशस्तकरदेवो भाष्यं सकृद्गु-णनमात्रेण महोग्रदष्टकविषापहारदृष्टलोकोत्तरवैभवं चकार । तत्र चतस्रो वृत्त-यो निर्वृत्ताः । एकां व्योमवतीनाम्नीं वृत्तिं व्योमशिवाचार्यो(२) जुगुम्फ । द्वितीयां तु न्यायकन्दल्यभिधानां श्रीधराचार्यः सन्ददर्भ । तृतीयां किरणावलीनाम्नी-मुदयनाचार्यस्ततान । चतुर्थीं तु लीलावतीतिख्यातां श्रीवत्साचार्यो(३) ब-

---

(१) अनेन ग्रन्थारम्भे "श्रीमज्जिनप्रभविभोरधिगत्य न्यायकन्दलीं किञ्चिदि"त्युक्तम् । अत्राधिगत्य-इत्यस्य अधीत्येति परमार्थः । जिनप्रभविभुश्च १२२६ शाकवर्षे आसीत् तद्यथा ।

"दुर्गवृत्तिगरुचादिगणस्य श्रीजिनप्रभमुनिप्रभुरेताम् ।
पञ्जिकां(स)मुपनीय विनेते (वितेने) वृत्तिमल्पमतिबोधनिमित्तम् ॥
रसयुगरविमित (१२२६) शकवर्षभाद्रपदसितचतुर्दशीदिवसे ।
भाडङ्गद्रङ्ग इयं समर्थिता गणयुगलवृत्तिः ॥"

भाडङ्ग इति कस्यचित् स्थानविशेषस्य नाम(?)

(२) व्योमवतीवृत्तेश्च चर्चा उपलभ्यमानेषु पठनपाठनयोः प्रचलितेषु ग्रन्थेषु नोपलभ्यते । किन्तु व्योमशिवाचार्यशिवादित्यमिश्रविरचितं सप्तपदार्थीनामकं लघु प्रकरणं दृश्यते । एवं शिव-दित्यकृता लक्षणमालापि खण्डनखाद्यटीकायां प्रमालक्षणखण्डनप्रस्तावे चित्सुखीटीकायामपि द्वितीयपरिच्छेदे उद्धृताऽस्ति ।

(३) उपलभ्यमाना न्यायलीलावती च श्रीवल्लभाचार्यविरचिता सापि व्याख्याकाराणां प्रशस्तपादभाष्यस्य किरणावल्यादिवद्व्याख्यानत्वेन नेष्टा परम्परया यथा कथंचिद् भवितुमर्हति । अयं वल्लभाचार्यश्च वैष्णवसम्प्रदायप्रवर्तकवल्लभाचार्याद् भिन्न इत्यादि सर्वं लीलावतीभूमिकायां प्रपञ्चयिष्यामस्तदचिरेणैव कालेन विद्वांसो दृष्टिपूतं करिष्यन्ति ।

शङ्करमिश्रपद्मनाभमल्लिनाथजगदीशकृतानां व्याख्यानानामर्वाचीनत्वान्नात्र नोल्लेखः कृतः ॥

बन्ध । चतस्रोऽपि गम्भीरार्थाः तत्रेमां न्यायकन्दलीं प्रारभमाणः श्रीधरदेव" इत्यादि ।

अत्र चतुर्षु भाष्यव्याख्यानेषु उत्तरोत्तरापेक्षया पूर्वपूर्वस्य प्राचीनत्वमिति नायमभिप्रायो राजशेखरस्य "एकां व्योमवतीनाम्नीं वृत्ति"मित्युक्तत्वात् प्रथमामित्यनुक्तत्वादुपपत्तेश्चादर्शितत्वाच्च । पूर्वपूर्वस्य प्राचीनत्वाग्रहे तु लीलावत्यां कन्दल्याः किरणावल्याश्चोद्धृतत्वात् लीलावत्यपेक्षया प्राचीनत्वेऽपि व्योमवतीवृत्तेः कन्दल्यादिष्वनुद्धारात् सर्वापेक्षया प्राचीनत्वं न सम्भवति । तदस्तु तावत् सम्प्रति कन्दलीकिरणावल्योः प्राचीननवीनभावो विचार्यते ॥

तत्रोदयनाचार्यो बुद्धिनिरूपणान्तामेव किरणावलीं(१) निर्माय परलोकमगच्छन्निति श्रीधराचार्यः प्रशस्तपादभाष्यव्याख्यानस्य समाप्तिमिच्छन् प्रसन्नगम्भीरं न्यायकन्दलीनामकं सम्पूर्णं व्याख्यानं चकार कन्दलीग्रन्थस्य किरणावल्याश्छायारूपत्वाद्बुद्धिनिरूपणान्तं व्याख्यानं सुष्ठु ततः परमल्पेनैवांशेन ग्रन्थः पूर्णतां नीत इति वृद्धाः । एतदनुसृत्यैव किरणावलीभूमिकायां श्रीधराचार्यापेक्षया उदयनाचार्यस्य पूर्वकालावस्थायित्वं प्रतिपादितमस्माभिः ॥

वस्तुतस्तु किरणावलीमवलम्ब्य न्यायकन्दलीनिर्माणं वा न्यायकन्दलीमवलम्ब्य किरणावलीनिर्माणमित्युभयोः संवादनेन स्फुटमवगमेऽपि पूर्वपरभावो नावगम्यते । तथा च किरणावल्यां प्रमाणत्वेनोद्धृतानि वचनानि(२)

---

(१) किरणावलीप्रकाशतद्विवृत्यादयोऽपि ग्रन्था बुद्धिनिरूपणे एव समाप्ताः । अत एव तर्कदीपिकायाम् । "ननु मङ्गलस्य समाप्तिसाधनत्वं नास्ति मङ्गले कृतेऽपि किरणावल्यादौ समाप्त्यदर्शनात्" । अस्मन्निकटे वर्तमाने पुस्तकेऽयं पाठः । मुद्रितपुस्तके तु शोधकप्रमादात् पाठवैषम्यम् ।

(२) बनारससंस्कृतसीरीजमुद्रितकिरणावलीपुस्तके ९० पृ० ५ पं० ।

"क्षणद्वयं लवः प्रोक्तो निमेषस्तु लवद्वयम् ।
अष्टादशनिमेषास्तु काष्ठा त्रिंशत्तु ताः कला ॥
त्रिंशत्कलो मुहूर्तः स्यात् त्रिंशद्रात्र्यहनी च ते ।
अहोरात्राः पञ्चदश पक्षो मासस्तु तावुभौ ॥
ऋतुर्मासद्वयं प्रोक्तमयनं तु ऋतुत्रयम् ।
अयनद्वितयं वर्षो मानुषेऽयमुदाहृतः ॥
एष दैवस्त्वहोरात्रस्तैः पक्षादि च पूर्ववत् ।
देववर्षसहस्राणि द्वादशैव चतुर्युगम् ॥
चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते ।
रात्रिश्चैतावती तस्य ताभ्यां पक्षादिकल्पना ॥" इति ।

कन्दल्यां क्वचिद् व्याख्यारूपेणैवोपलभ्यन्ते(१) क्वचिच्च मूलरूपेण(२) उदयनाचार्यमतं च कन्दल्या "मित्येके" इत्याकारेण दृश्यते(३) तस्मात् सम्भवति किरणावलीमवलम्ब्य कन्दलीनिर्माणम् । किन्तु किरणावल्यपेक्षया कन्दलीग्रन्थस्य शिथिलत्वात्(४) पूर्वं समीचीनस्य व्याख्यानस्य सत्त्वेऽपि पश्चात् शिथिलव्याख्यानर्निर्माणस्याचार्याणामयुक्तत्वात् श्रीधराचार्यमतस्य किरणावल्यां खण्डनाच्च (५)कन्दलीमवलम्ब्य किरणावलीनिर्माणं सम्भवति । परन्तु यावत्पर्यन्तमेकस्मिन्

---

(१) न्यायकन्दल्याम् ५० पृ· १४ पं । "अस्माकं पञ्चदशनिमेषाः काष्ठाः त्रिंशतिः काष्ठाः कला पञ्चदश कला नाडिका त्रिंशत्कलो मुहूर्तः त्रिंशता मुहूर्तैरहोरात्रः पञ्चदशाहोरात्राः पक्षः द्वौ पक्षौ मासः द्वौ मासावृतुः षडृतवो द्वादशमासाः संवत्सरः ऋतुत्रयेणोत्तरायणम् ऋतुत्रयेण च दक्षिणायनम् उत्तरायणं च देवानां दिनम् दक्षिणायनं च देवानां रात्रिः तथाभूताहोरात्रशतत्रयेण षष्ट्यधिकेन वर्षं द्वादशसहस्रैश्च वर्षैश्चतुर्युगम् चतुर्युगसहस्रेण ब्रह्मणो दिनमेकम्"-इति । एवमनेकत्र ॥

(२) किरणावल्याम् व· सं· सी· मु· पु· ९ पृ· ९ पं· । "दुःखसन्ततिरत्यन्तमुच्छिद्यते सन्ततित्वात् प्रदीपसन्ततिवदित्याचार्याः ।"

"न्यायकन्दल्याम् ४ पृ· १२ पं· । दुःखसन्ततिर्धर्मिणी अत्यन्तमुच्छिद्यते सन्ततित्वाद्दीपसन्ततिवदिति तार्किकाः ।"

किरणावल्याम् ४२ पृ· ५ पं· । "तथा चाचार्याः समानासमानजातीयव्यवच्छेदो लक्षणार्थ इति ।"

न्यायकन्दल्याम् २८ पृ· २१ पं· । "यथाहोद्द्योतकरः । समानासमानजातीयव्यवच्छेदो लक्षणार्थः ।" एवमनेकत्र ॥

(३) किरणावल्यां कालनिरूपणे । "परत्वापरत्वयोरुत्पत्तिर्गुणे वक्ष्यते । ते युवस्थविरयोर्वर्तमाने कालमनुमापयतः । कथम् । बहुतरतपनपरिस्पन्दातिरिक्तजन्मनि हि स्थविरे युवानमवधिं कृत्वा परत्वमुत्पद्यमानमसमवायिकारणवत् कार्यत्वात् । इति स्थिते रूपादीनां च व्यभिचारे तपनपरिस्पन्दानां च वैयधिकरण्ये तदवच्छिन्नद्रव्यसंयोगोऽसमवायिकारणमिति विज्ञायते" । "स्थविरादौ परत्वं तपनपरिस्पन्दप्रकर्षबुद्धिजन्यं तदनुविधायित्वात् ।"

न्यायकन्दल्याम् ६४ पृ· १४ पं· । "आदित्यपरिवर्तनाल्पीयस्त्वभूयस्त्वनिबन्धनो युवस्थविरयोः परापरव्यवहार इत्येके । तदयुक्तम् । आदित्यपरिवर्तनस्य युवस्थविरयोः सम्बन्धाभावात् असम्बद्धस्य निमित्तत्वे चातिप्रसङ्गात् ॥"

किरणावल्यां संख्यानिरूपणे "शतं पिपीलिकानां मया निहतमित्यत्र कथम्, गुणादिष्विव गौणो व्यवहारः आश्रयानुपपत्तेर्बाधकस्य तुल्यत्वात् ॥"

न्यायकन्दल्याम् ११९ पृ· ५ पं· "शतं पिपीलिकानां मया निहतमिति तत्र कथं शतसंख्याया उत्पत्तिः आश्रयाभावात् नोत्पद्यत एव तत्र सा कारणाभावात् शतव्यवहारस्तु रूपादिष्विव गौण इत्येके समर्थयन्ति ॥"

(४) किरणावल्याम्· ५८ पृ· १ पं· । इत्थं वृक्षादयः प्रतिनियतभोक्त्रधिष्ठिताः । जीवनमरणस्वप्नजागरणरोगभेषजप्रयोगबीजसजातीयानुबन्धानुकूलोपगमप्रतिकूलापगमादिभ्यः प्रसिद्धशरीरवत् "न चैते सन्दिग्धासिद्धाः आध्यात्मिकवायुसम्बन्धात् । सोऽपि मूले निषिक्तानामपां दोहदस्य च पार्थिवस्य धातोरभ्यादाना"दित्यादि । "आगमश्चात्रार्थे बहुतरोऽनुसन्धेयः ॥"

न्यायकन्दल्याम् ८३ पृ· २२ पं· "न तु वृक्षादयः सात्मकाः वृद्ध्याद्युत्पादनसमर्थस्य विशिष्टात्मसम्बन्धस्याभावात् ॥"

(५) न्यायकन्दल्याम् ६० पृ· २० पं· । "इतोऽपि शब्दो नात्मगुणः आत्मान्तरग्राह्यत्वात् । अनेकप्रतिपत्तृसाधारणत्वादित्यर्थः ।"

ग्रन्थे ऽपरग्रन्थस्य तत्कर्तुर्वा नाम नोपलभ्यते तावत् पूर्वपश्चाद्भावनिर्णयः सम्यग्भवितुं नार्हतीति ग्रन्थयोः पूर्वपरनिश्चयाभावे ऽपि श्रीधराचार्योदयनाचार्ययोर्यथा च समानकालावस्थायित्वं सम्भवति तथा किरणावल्या उपसंहारे प्रपञ्चयिष्यामः ॥

श्रीधरभट्टाचार्यस्य माता अच्छोका(१) अब्बोका(२) वा पिता बलदेवः वङ्गदेशापरपर्याये गौडदेशे(३) राढापुर्याः दक्षिणभागे भूरिसृष्टिग्रामे निवासश्चासीत् । अयं च पाण्डुदासाख्येन कायस्थश्रेष्ठेन(४) प्रार्थितः त्र्यधिकदशोत्तरनवशतशाकाब्दे (९१३) (५)ऽमुं न्यायकन्दलीग्रन्थं प्रणीतवानिति तद्ग्रन्थान्तिमपद्यैर्निश्चीयते तथाहि ।

आसीद्दक्षिणराढायां द्विजानां पुण्यकर्मणाम्(६) ।
भूरिसृष्टिरिति ग्रामो भूरिसृष्टिजनाश्रयः ॥
अम्भोराशेरिवैतस्माद्बभूव क्षितिचन्द्रमाः ।
जगदानन्दकृद्वन्द्यो(७) बृहस्पतिरिव द्विजः ॥

तस्माद्विशुद्धगुणरत्नमहासमुद्रो विद्यालतासमवलम्बनभूरुहोऽभूत् ।
स्वच्छाशयो विविधकीर्तिनदीप्रवाहप्रस्पन्दनोत्तमबलो(८) बलदेवनामा ॥

---

किरणावल्याम् १०६ पृ० ११ पं० । "अन्ये त्वात्मान्तरग्राह्यत्वादिति अनेकप्रतिपत्तृसाधारणत्वादिति हेत्वर्थं वर्णयन्ति स तु सन्दिग्धासिद्धः ।"

विश्वनाथपञ्चानना अपि एतदभिप्रायेणैव सिद्धान्तमुक्तावल्याम् । "यत्रानियतैकत्वज्ञानं तत्र त्रित्वादिभिन्ना बहुत्वसंख्योत्पद्यते यथा सेनावनादावित्ति कन्दलीकारः । आचार्यास्तु त्रित्वादिकमेव बहुत्वं मन्यन्ते तथा च त्रित्वत्वादिव्यापिका बहुत्वत्वजातिः । सेनावनादावुत्पन्नेऽपि त्रित्वादौ त्रित्वत्वाद्यग्रहो दोषात् ।" महादेवभट्टास्तु पाठममुं प्रक्षिप्तत्वेनावधारयन्ति ॥ अस्मन्मुद्रितपुस्तके २२८ पृ० ६ पं० ।

(१) अयमपि पाठो राजशेखरेण न्यायकन्दलीटीकायामुद्धृतः ।
(२) अम्भोकेति-पा० ३ पु० ।
(३) तदुक्तं शक्तिसङ्गमतन्त्रे ।

"वङ्गदेशं समारभ्य भुवनेशान्तगं शिवे ।
गौडदेशः समाख्यातः सर्वविद्याविशारदः ॥" इति ।

प्रबोधचन्द्रोदयनाटकेऽपि प्रथमाङ्के ।

"गौडं राष्ट्रमनुत्तमं निरुपमा तत्रापि राढापुरी
भूरिश्रेष्ठिकनाम धाम परमं तत्रोत्तमो नः पिता ॥" इत्यादि ।

(४) न्यायकन्दल्याम् संस्कारग्रन्थे २६६ पृ० २५ पं० । "गुणरत्नाभरणः कायस्थतिलकः पाण्डुदासः ।"

(५) नवशतवर्षाब्दे इति क्वचित् । तत्र केचित् संवत्सराब्दे इत्यर्थं कल्पयन्ति स च प्रामादिकः । ८४५ वैक्रमसंवत्सरे आविर्भूतस्य शङ्कराचार्यस्य समानकालावस्थायिनो मण्डनमिश्रस्य वचनानां कन्दल्यां प्रमाणत्वेनोपन्यासात् । (६) भूरिकर्मणाम्-पा० १ पु० ।

(७) जगदानन्दनात्-पा० १ पु० । (८) प्रस्पन्दसम्पदबलो- इति क्वचित् ।

तस्याभूद्दूरियशसो विशुद्धकुलसम्भवा ।
अच्छोकेत्यर्चितगुणा गुणिनो गृहमेधिनी ॥
सच्छायस्थूलफलदो बहुशाखो द्विजाश्रयः ।
ताभ्यां ([1]) श्रीधर इत्युच्चैरर्थिकल्पद्रुमोऽभवत् ॥
असौ विद्याविदग्धानामसूत श्रवणोचितास् ।
षट्पदार्थहितामेतां रुचिरां न्यायकन्दलीम् ॥
त्र्यधिकदशोत्तरनवशतशाकाब्दे (९१३) न्यायकन्दलीरचिता ।
श्रीपाण्डुदासयाचितभट्टश्रीश्रीधरेणेयम् ॥

श्रीधरभट्टाचार्यरचिता अन्येऽपि ग्रन्था न्यायकन्दल्यामुद्धृता यथा अद्वयसिद्धिः ([2]) । तत्त्वबोधो वा तत्त्वप्रबोधः ([3]) । तत्त्वसंवादिनी([4]) । संग्रहटीका([5]) च ।

भगवद्गीताविष्णुपुराणश्रीमद्भागवतादिटीकाकारश्रीधरस्वामी([6]) त्वस्मात् श्रीधराचार्याद्भिन्न एव ।

---

(१) तस्यां-पा॰ १ पु॰ ।
(२) न्यायकन्दल्याम् ५ पृ॰ ४ पं॰ ।  (३) न्यायकन्दल्याम् १४६ पृ॰ ४ पं॰ ।
(४) न्यायकन्दल्याम् ८२ पृ॰ १ पं॰ ।
(५) न्यायकन्दल्याम् १५६ पृ॰ २० पं॰ ।
(६) श्रीधरस्वामिना तु विष्णुपुराणटीकायामुक्तम् ।

"श्रीमच्चित्सुखयोगिमुख्यरचितव्याख्यां निरीक्ष्य स्फुटम्
तन्मार्गेण सुबोधसंग्रहवतीमात्मप्रकाशाभिधाम् ।
श्रीमद्विष्णुपुराणसारविवृतिं कर्ता यतिः श्रीधर-
स्वामी सद्गुरुपादपद्ममधुपः साधुः स्वधीशुद्धये ॥"

इत्युक्त्या चित्सुखमुनिसमयात् पश्चाद्भावी श्रीधरस्वामीति सम्भवति । चित्सुखमुनिस्तु विद्यारण्यसमयात् किञ्चिदेव पूर्वकालावस्थायी विद्यारण्यश्च १३१३ शाकवर्षे आसीदिति तद्धत्तताम्रपत्त्रादवगम्यते । तथाहि । वेदान्तकल्पतरुकर्ता व्यासाश्रमापरनामधेयोऽमलानन्दो "यथार्थानुभवानन्दपदगीतं गुरुं नुमः" अपि च "आनन्दात्मयतीश्वरं तमनिशं वन्दे गुरूणां गुरुम्" इति कल्पतरुग्रन्थादनुभवानन्दशिष्यः आनन्दात्मयतीश्वरप्रशिष्यः इति सिध्यति । विद्यारण्यमुनिभिस्तु पञ्चदश्यां "नमः श्रीशङ्करानन्दगुरुपादाम्बुजन्मने" इति । एवं "विवरणप्रमेयसंग्रहेऽपि" "यच्छङ्करानन्दपदं हृदब्जे" इत्युक्तम् । शङ्करानन्दश्च गीतातात्पर्यबोधिन्याम् "भक्त्या प्रणम्य स्वगुरुमानन्दात्मसरस्वतीम्" एतेन विद्यारण्यस्य तथामलानन्दस्यापि परमगुरुः आनन्दात्मयतिरिति सिद्धम् । एवं चित्सुखमुनिशिष्यं तत्त्वप्रदीपिकाटीकाकारं सुखप्रकाशमुनिं प्रणमति वेदान्तकल्पतरावमलानन्दो यथा "सुखप्रकाशशशिनं तं नौमि विद्यागुरुम्" एतेनामलानन्दस्य परमगुरुश्चित्सुखमुनिरपीति सुखप्रकाशामलानन्दविद्यारण्यानां समानकालावस्थायित्वं सिद्धम् । सुखप्रकाशकृततत्त्वप्रदीपिकाटीकापुस्तकं तु विक्रमीय १५५८ संवत्सरे लिखितं वाराणसीस्थराजकीयसंस्कृतविद्यामन्दिरे वर्तते विद्यारण्यदत्तताम्रपत्त्रसमयश्च १३१३ शककाल इति आनन्दाश्रमश्रेण्यां २ संख्यायां निर्दिष्टमिति सर्वं समञ्जसम् ।

सम्बन्धो धर्मिणोरभावात् । अथायुतौ सिद्धौ तथापि कः सम्बन्धोऽपृथक्सिद्धत्वादेव भिन्नयोर्हि सम्बन्धो यथा कुण्डबदरयोरिति । तदपरे न मृषन्ति । न ह्ययमस्यार्थो युतौ न सिद्धौ न निष्पन्नाविति असतोः समवायानभ्युपगमात् । नाप्यस्यायमर्थः अयुतौ सिद्धाविति एकात्मकत्वे ह्येकमेव वस्तु स्यान्नोभयम् परस्परात्मकत्वाभावलक्षणत्वादुभयरूपतायाः । न च तदेकं वस्तु परमार्थतः परस्परविलक्षणेन रूपेण तयोराकारयोः प्रतिभासनात् विलक्षणाकारबुद्धिवेद्यत्वस्यैव भेदलक्षणत्वात् । अन्यथा भेदाभेदव्यवस्थानुपपत्तेः । तस्मान्न स्वरूपाभेदोऽप्ययुतसिद्धिः किं त्वयुतसिद्धानामिति परस्परपरिहारेण पृथगाश्रयानाश्रितानामित्यर्थः । तथा च सति सम्बन्धो नानुपपन्नः स्वरूपभेदस्य सम्भवाद्भिन्नयोश्च परस्परोपश्लेषस्य(१) दहनायःपिण्डयोरिव विना सम्बन्धेनासम्भवात् । इयांस्तु विशेषो वह्निरुत्पत्तेः पश्चादयःपिण्डेन सह सम्बद्ध्यते इह तु स्वकारणसामर्थ्यादुपजायमानमेव तच्च सम्बद्ध्यते यथा छिदिक्रिया छेद्येनेत्यलम् । ननु किमर्थं षडेव पदार्था उद्दिष्टा नापरे तेषामेव भावात् तदन्येषामभावाच्च तदभावश्च सर्वैः सर्वप्रमाणैरनुपलभ्यमानत्वाच्छशविषाणवत् । षण्णां सामान्यलक्षणं विधिप्रत्ययविषयत्वम् । व्यावृत्तं तु लक्षणं यथा गुणाश्रयो द्रव्यम् । सामान्यवानगुणः संयोगविभागयोरनपेक्षो न कारणं गुणः । एकद्रव्यमगुणं संयोगविभागयोरनपेक्षकारणं कर्म । अनुवृत्तिप्रत्ययकारणं सामान्यम् । अत्यन्तव्यावृत्तिबुद्धिहेतुर्विशेषः । अयुतसिद्धयोराश्रयाश्रयिभावः समवाय इति ॥

## एवं धर्मैर्विना धर्मिणामुद्देशः कृतः ॥

अनुद्दिष्टेषु धर्मिषु धर्मा न शक्यन्ते वक्तुमतो धर्माणामुद्देशं प्रक्रमयितुं सङ्गतिं प्रदर्शयति । एवमिति । एवं पूर्वोक्तेन ग्रन्थेन धर्मैर्विना धर्मान् परित्यज्य धर्मिणामुद्देशः कृतो धर्मिणां सञ्ज्ञामात्रेण संकीर्तनं कृतमिदानीं धर्मा उद्दिश्यन्ते इति भावः । यद्यपि पूर्वं द्रव्यादीनां विभागः कृतस्तथाप्युद्देशः कृत इत्युक्तम् विभागस्य नामधेयसंकीर्तनमात्रेणोद्देशे ऽन्तर्भावात् ॥

---

(१) परस्परोपश्लेषो-पा॰ २ । ४ पु॰ ।

**षण्णामपि पदार्थानामस्तित्वा[१]भिधेयत्वज्ञेयत्वानि ॥**

यद्यपि धर्माः षट्पदार्थेभ्यो न व्यतिरिच्यन्ते किं तु ते एवान्योन्यापेक्षया धर्मा धर्मिणश्च भवन्तीति । तथापि तेषां धर्मिरूपतया परिज्ञानार्थं पृथगुद्देशं करोति । षण्णामपीति । अस्तित्वं स्वरूपवत्त्वं षण्णामपि साधर्म्यं यस्य वस्तुनो यत्स्वरूपं तदेव तस्यास्तित्वम् । अभिधेयत्वमपि अभिधानप्रतिपादनयोग्यत्वं तच्च वस्तुनः स्वरूपमेव[२] भावस्वरूपमेवावस्थाभेदेन ज्ञेयत्वमभिधेयत्वं चोच्यते ॥

**आश्रितत्वं चान्यत्र[३] नित्यद्रव्येभ्यः ॥**

आश्रितत्वं च परतन्त्रतयोपलब्धिः न समवायलक्षणा वृत्तिः समवाये तदभावात् इदं चाश्रितत्वं चतुर्विधेषु परमाणुषु आकाशकालदिगात्ममनःसु नास्तीत्याह । अन्यत्र नित्यद्रव्येभ्य इति । ये तु धर्मान् व्यतिरिक्तानिच्छन्ति तेषामेकस्मिन् समस्तवस्तुव्यापिन्यस्तीतिप्रत्ययहेतावस्तित्वे कल्पिते द्रव्यादिषु सत्तावैयर्थ्यम् अथास्तित्वं प्रतिवस्तु भिद्यते तदा तत्कल्पनावैयर्थ्यं सत्तायाः स्वरूपसत्तायाश्च सदिति प्रत्ययोपपत्तेः येषां तु भावस्वरूपमेवास्तित्वं न तेषां व्यर्था सत्ता स्वरूपस्यानुवृत्तिप्रत्ययहेतुत्वाभावात् नाप्यस्तित्वमनर्थकं निःस्वरूपे सत्तायाः समवायाभावादित्युभयमुपपद्यते ॥

**द्रव्यादीनां पञ्चानां[४] समवायित्वमनेकत्वं च ॥**

द्रव्यादीनां विशेषान्तानां साधर्म्यं साधयति । समवायित्वं समवायलक्षणा वृत्तिः । अनेकत्वं परस्परविभिन्नत्वमितरेतरव्यावृत्तं स्वरूपमेव । द्रव्यादीनामित्युक्ते समवायोपि गृह्येत तदर्थं पञ्चानामित्युक्तम् । पञ्चानामित्युक्ते च केषामिति न ज्ञायते तदर्थं द्रव्यादीनामिति ॥

**गुणादीनां पञ्चानामपि निर्गुणत्वनिष्क्रियत्वे ॥**

गुणादीनां समवायान्तानां साधर्म्यमाह । गुणादीनामिति । निर्गुणत्वं गुणाभावविशिष्टत्वं निष्क्रियत्वं क्रियाभावविशिष्टत्वं यथा भावोऽभावस्य विशेषणं

---

(१) पदार्थानां साधर्म्यमस्तित्वा–पा॰ ५ पु॰ ।
(२) ज्ञेयत्वं ज्ञानग्रहणयोग्यत्वं तदपि स्वरूपमेव इत्यधिकं २ । ४ पु॰ ।
(३) आश्रितत्वं त्वन्यत्र–पा॰ ६ पु॰ ।
(४) पञ्चानामपि–पा॰ ५ पु॰ ।

स्वविशिष्टप्रत्ययजननादेवमभावोपि तथा चोपनिबद्धमघटं भूतलमिति । भावाभावयोरसम्बन्धात् कथमभावो विशेषणमिति चेत् अस्ति तावदयं विशिष्टप्रत्ययः तद्दर्शनात् सम्बन्धमपि कल्पयिष्यामः । यदि सम्बद्धमेव विशेषणं मन्यसे ॥

## द्रव्यादीनां त्रयाणामपि(१) सत्तासम्बन्धः सामान्यविशेषवत्त्वं स्वसमयार्थशब्दाभिधेयत्वं धर्माधर्मकर्तृत्वं च ॥

द्रव्यादीनां त्रयाणां सत्तासम्बन्धः सत्तया सामान्येन सम्बन्धः समवायरूपो द्रव्यगुणकर्मणां साधर्म्यम् । यथा चैतेषु(२) सत्तासम्बन्धस्तथोपपादितम् । इदं त्विह निरूप्यते । किं सत्तासम्बन्धः सतोऽसतो वा सतश्चेत् प्राक् सत्तासम्बन्धात् सन्नेवासावथै इति व्यर्था सत्ता अथासतः सम्बन्धः खरविषाणादिष्वपि सत्ता स्यात् नित्येषु तावत्पूर्वापरभावानभ्युपगमः अनित्येषु प्रागसत एव सत्ताकारणसामर्थ्यात् । न च खरविषाणादिष्वतिप्रसङ्गः तदुत्पत्तौ कस्यचित्सामर्थ्याभावात् । अन्यदपि साधर्म्यं द्रव्यादीनां त्रयाणां कथयति । सामान्यविशेषवत्त्वं चेति । अनुवृत्तिव्यावृत्तिहेतुत्वात् सामान्यविशेषा द्रव्यत्वादयस्तैः सह सम्बन्धो द्रव्यादीनां स च समवाय एव । स्वसमयार्थशब्दाभिधेयत्वं चेति । वैशेषिकैः स्वयं व्यवहाराय यः संकेतः कृतोऽस्मिन् शास्त्रे ऽर्थशब्दाद् द्रव्यगुणकर्माणि प्रतिपत्तव्यानि । तेन द्रव्यादीनि त्रीणि निरुपपदेनार्थशब्देनोच्यन्ते । धर्माधर्मकर्तृत्वं चेति । धर्माधर्मोत्पत्तिनिमित्तत्वं त्रयाणां यथा हि भूमिरेकैव दीयमानापह्रियमाणा च धर्माधर्मयोः कारणम् । एकः संयोगो द्वयोः कारणं यथा कपिलास्पर्शौ नरास्थिस्पर्शश्च । एवं कर्माप्युभयकारणं यथा तीर्थगमनं शौण्डिकगृहगमनं च एवमन्यदप्यूह्यम् । धर्माधर्मकर्तृत्वमितित्वप्रत्ययेन धर्माधर्मजननं प्रति तेषां निजा शक्तिरुच्यते । ननु जातिरपि तयोः कारणं न तस्याः स्वाश्रयव्यवच्छेदमात्रेण चरितार्थत्वात् ॥

## कार्यत्वानित्यत्वे कारणवतामेव ॥

(१) अपीति नास्ति २ । ५ पु० । (२) चैतेषां–पा० २ । ४ पु० ।

कार्यत्वानित्यत्वे कारणवतामेव। येषां द्रव्यादीनामुत्पत्तिकारणमस्ति तेषां कार्यत्वमनित्यत्वं च धर्मौ न सर्वेषामित्यर्थः। स्वकारणे समवायः प्रागसतः सत्तासमवायो वा कार्यत्वमित्येके। तदयुक्तम्। प्रध्वंसे तदभावात् तस्मात् कारणाधीनः स्वात्मलाभः कार्यत्वमिति लक्षणं व्यापकत्वात्। प्राक्प्रध्वंसाभावोपलक्षिता वस्तुनः सत्तैवानित्यत्वमिति केचित्। तदयुक्तम्। अप्रतीतेः अनित्य इति विनाशीत्येवं लोकः प्रत्येति न तु सत्ताविशिष्टताम्। उत्पत्तिविनाशयोगित्वमित्यपरः। तदप्यसारम्। प्रागभावे उत्पत्तेरभावात् तस्याप्यनित्यत्वेन लोके संप्रतिपत्तेः तस्मात् स्वरूपविनाश एवानित्यत्वमिति। यथोक्तम्। अनित्यत्वं विनाशाख्यं क्रियासामान्यमुच्यते इति। यद्यपि विनाशो वस्तुकाले नास्ति तथापि प्रमाणान्तरसिद्धसद्भावो भवत्येव विशेषणम् अनित्यो घट इति प्रत्येतुरेकत्वात् तथा लोके विनाशि शरीरमध्रुवा विषया इति॥

## कारणत्वं चान्यत्र पारिमाण्डल्यादिभ्यः(१)॥

कारणत्वं चान्यत्र पारिमाण्डल्यादिभ्य इति। पारिमाण्डल्यमिति परमाणुपरिमाणम् आदिशब्दाद् द्व्यणुकपरिमाणम् आकाशकालदिगात्मनां विभुत्वमन्त्यशब्दमनःपरिमाणं परत्वापरत्वे द्विपृथक्त्वमन्त्यावयविपरिमाणं चेत्यादि ग्राह्यम्। एतानि परित्यज्यापरेषां द्रव्यादीनां त्रयाणां कारणत्वं समवाय्यसमवायिकारणत्वं यद्यपि द्रव्यस्य नासमवायिकारणत्वं न च समवायिकारणत्वं गुणकर्मणोस्तथापि निमित्तकारणविलक्षणतयेदं साधर्म्यमुक्तम्॥

## द्रव्याश्रितत्वं चान्यत्र नित्यद्रव्येभ्यः॥

द्रव्याश्रितत्वं चान्यत्र नित्यद्रव्येभ्य इति। नन्वाश्रितत्वं षण्णामित्युक्तं तेनेदं पुनरुक्तं न पुनरुक्तं द्रव्योपलक्षितस्याश्रितत्वस्यात्र विवक्षितत्वादिति कश्चित्। तदयुक्तम्। सामान्यादीनामपि द्रव्योपलक्षितस्याश्रितत्वस्य सम्भवान्नेदं द्रव्यादित्रयसाधर्म्यकथनं स्यात् तस्मादित्थं व्याख्येयम् अन्यत्र नित्यद्रव्येभ्य इति द्रव्यग्रहणमुपलक्षणं तद्वृत्तयोऽन्त्या विशेषास्तेपि गृह्यन्ते। नित्यद्रव्याणि तद्गतांश्च विशेषान् परित्यज्य द्रव्ये एवाश्रितत्वं द्रव्यादीनां त्रयाणां साधर्म्यं नापरेषामित्यर्थः॥

(१) पारिमाण्डल्यादिभ्यः—पा॰ ५ पु॰।

**सामान्यादीनां त्रयाणां(१) स्वात्मसत्त्वं बुद्धिलक्षणत्वमकार्यत्वमकारणत्वमसामान्यविशेषवत्त्वं नित्यत्वमर्थशब्दानभिधेयत्वं चेति ॥**

सम्प्रति सामान्यादीनां साधर्म्यमाह । सामान्यादीनामिति । स्वात्मैव सत्त्वं स्वरूपं यत्सामान्यादीनां तदेव तेषां सत्त्वं न सत्तायोगः सत्त्वम् । एतेन सामान्यादीनां त्रयाणां सामान्यरहितत्वं (२) साधर्म्यमुक्तमित्यर्थः । कथमेतद्बाधकसद्भावात् सामान्ये सत्ता(३) नास्त्यनिष्टप्रसङ्गात् । विशेषेष्वपि सामान्यसद्भावे संशयस्यापि सम्भवात् निर्णयार्थं विशेषानुसरणेप्यनवस्थैव समवायेपि सत्ताभ्युपगमे तद्वृत्त्यर्थं समवायाभ्युपगमादनिष्टापत्तिरेव दूषणं गोत्वादिष्वपरजातिमत्त्वेन व्याप्तस्य सत्तासम्बन्धस्य तन्निवृत्तौ निवृत्तिसिद्धिः कुतस्तर्हि सामान्यादिषु सत्सदित्यनुगमः स्वरूपसत्त्वसाधर्म्येण सत्ताध्यारोपात् तर्हि मिथ्याप्रत्ययोयं को नामाह नेति भिन्नस्वभावेष्वेकानुगमो मिथ्यैव स्वरूपग्रहणं तु न मृषा स्वरूपस्य यथार्थत्वात् द्रव्यादिष्वपि सत्ताध्यारोपकृत एवास्तु प्रत्ययानुगमः नैवम् सति मुख्ये ऽध्यारोपस्यासम्भवात् न चेयं सामान्यादिष्वेव मुख्या बाधकसम्भवात् द्रव्यादिषु च तदभावात् । बुद्धिलक्षणत्वमिति(४) । बुद्धिरेव लक्षणं प्रमाणं येषां ते बुद्धिलक्षणाः विप्रतिपन्नसामान्यादिसद्भावे बुद्धिरेव लक्षणं नान्यत् द्रव्यादिसद्भावे त्वन्यदपि तत्कार्यं प्रमाणं स्यादित्यर्थः । कश्चित्पुनरेवमाह बुद्ध्या लक्ष्यन्ते प्रतीयन्ते इति बुद्धिलक्षणाः । तदयुक्तम् । द्रव्यादेरपि स्वबुद्धिलक्षणत्वान्नेदं वैधर्म्यमुक्तं स्यात् । अकार्यत्वं कारणानपेक्षस्वभावत्वं तच्च सामान्ये तावद्व्यक्तेः पूर्वमूर्ध्वं व्यक्तिकाले चावस्थितिग्राहकेण कारणाभावोपलब्धिसहकारिणा भूयोदर्शनजसंस्कारानुगृहीतेन प्रत्यक्षेणैव व्याप्तिवद् गृह्यते समवायस्याप्यकार्यत्वं पूर्वापरसहभावानवक्लृप्तेः यदि हि पटस्य समवायः पटात्पूर्वं सम्भवति असति सम्बन्धिनि कस्यासौ सम्बन्धः स्यात् । अथ पटेन सहोत्पद्यते तदा पटस्यानाधारत्वं प्रा-

(१) त्रयाणामपि-पा॰ ५ पु॰ । (२) सत्तासामान्यरहितत्वं-पा॰ २ । ४ पु॰ ।
(३) सत्तायां तावत् सत्ता-पा॰ २ । ४ पु॰ ।
(४) बुद्धिमात्रममीषां लक्षणं प्रमाणं न तु द्रव्यादिवत् प्रमाणान्तरमस्तीत्यर्थ इति किरणावल्याम् ।

प्रोति। अथ पश्चाद्भवति तथापि पटस्यानाधारत्वमेव न च कार्यत्वमनाधारं(१) युक्तम् तस्मादकृतकः समवायः। विशेषाणां चाकार्यत्वं वस्तुत्वे सति द्रव्यगुणकर्मान्यत्वात् सामान्यसमवायवत्सिद्धम्। अकारणत्वं समवाय्यसमवायिकारणत्वाभावः न तु निमित्तकारणत्वप्रतिषेधो बुद्धिनिमित्तत्वाभ्युपगमात्। असामान्यविशेषवत्त्वमपरजातिरहितत्वमित्यर्थः। सामान्येषु सामान्यं नाम नापरं सामान्यमस्ति। अत्रापि सामान्यप्राप्त्यानवस्थानात् विशेषसमवाययोस्तु सामान्याभावे कथित एव न्यायः कथं तर्हि सामान्येषु प्रत्ययानुवृत्तिः सामान्यं सामान्यमिति। अनेकव्यक्तिसमवायोपाधिवशात् विशेषेष्वप्येकशब्दप्रवृत्तिरत्यन्तव्यावृत्तिबुद्धिजनकत्वस्य सर्वत्र सम्भवात्। नित्यत्वं विनाशरहितत्वं(२) तदपि सामान्यस्य व्यक्त्युत्पादविनाशयोरवस्थितिग्राहिणा भूयो भूयः प्रवृत्तेन निरुपाधिप्रत्यक्षेण व्याप्तिवन्निश्चीयते समवायस्य तु सर्वत्र कार्योपलम्भादकृतकत्वाच्चानुमीयते। अर्थशब्दानभिधेयत्वं चेति स्वसमयार्थशब्दानभिधेयत्वं चैतेषां साधर्म्यम्। चः समुच्चये॥

**पृथिव्यादीनां नवानामपि द्रव्यत्वयोगः स्वात्मन्यारम्भकत्वं गुणवत्त्वं कार्यकारणाविरोधित्वमन्त्यविशेषवत्त्वम्॥**

इदानीं द्रव्याणामेव साधर्म्यं निरूपयति। पृथिव्यादीनामिति। पृथिव्यादीनामेव द्रव्यत्वेन सामान्येन योगः सम्बन्धः स क्रियतामत आह। नवानामपीति। अपिशब्दोऽभिव्याप्त्यर्थः। एतेन द्रव्यपदार्थस्येतरेभ्यो भेदलक्षणमुक्तम्। द्रव्यशब्दस्य प्रवृत्तिनिमित्तं च चिन्तितम्। अत्र कश्चिच्चोदयति द्रव्यत्वयोगो द्रव्यत्वसमवायः स च पञ्चपदार्थधर्मत्वात्कथं द्रव्यलक्षणमिति। अपरः समाधत्ते। यद्यपि सर्वत्राभिन्नः समवायस्तथापि द्रव्यत्वोपलक्षणभेदाद् द्रव्यस्य लक्षणं दृष्टो हि कल्पितभेदस्याप्याकाशस्य श्रोत्रभावेनार्थक्रियाभेद इति द्वयमप्येतदसाधीयः यथाकाशं श्रोत्रं नैवं योगो द्रव्यस्य लक्षणं किन्तु द्रव्यत्वमेव तत्त्वसम्बद्धं लक्षणं न स्यादिति योगसङ्कीर्तनं लिङ्गस्य धर्मिण्यस्तित्वकथनं तथा चैवं प्रयोगः पृथिव्यादिकमितरेभ्यो भिद्यते द्रव्यत्वात् येषामि-

(१) अनाधारे इति गुरवः। (२) विनाशरहितत्वात्-पा० २ पु०।

तरेभ्यो भेदो नास्ति तेषां द्रव्यत्वमपि नास्ति यथा रूपादीनामिति । तस्मादसच्चेद्यमसच्चेत्तरं च । अन्यदपि द्रव्याणां साधर्म्यमाह । स्वात्मन्यारम्भकत्वमिति । स्वसमवेतकार्यजनकत्वमित्यर्थः । गुणवत्त्वं गुणैः सह सम्बन्धः । एतदप्युभयं गुणादिभ्यो द्रव्याणां वैधर्म्यमन्यत्रासम्भवात् । कार्यकारणाविरोधित्वम् । गुणो हि क्वचित्कार्येण विनाश्यते यथाद्यः शब्दो द्वितीयशब्देन क्वचित्कारणेन विनाश्यते यथान्त्यः शब्द उपान्त्यशब्देन कर्मापि कार्येण विनाश्यते यथोत्तरसंयोगेन द्रव्याणि तु न कार्येण विनाश्यन्ते नापि कारणेनेति कार्यकारणाविरोधीनि नित्यानां कारणविनाशयोरभावादेव कारणेनाविनाशः अनित्यद्रव्याणां कारणविनाशयोः सम्भवेऽपि कारणेन न विनाशः(१) किं त्वन्येनेति विवेकः । तथान्त्यविशेषवत्त्वमन्त्यविशेषयोगित्वमित्यर्थः ॥

## अनाश्रितत्वनित्यत्वे चान्यत्रावयविद्रव्येभ्यः ॥

अनाश्रितत्वं क्वचिदप्यसमवेतत्वं नित्यत्वं विनाशरहितत्वं च द्रव्याणां साधर्म्यं तत् किं सर्वेषां साधर्म्यमित्यत आह । अवयविद्रव्येभ्योऽन्यत्रेति । अवयविद्रव्याणि परित्यज्यान्त्यविशेषवत्त्वानाश्रितत्वनित्यत्वान्यन्यत्र सन्तीत्यर्थः। न केवलं पूर्वोक्ताः पृथिव्यादीनां धर्माः किं त्वनाश्रितत्वनित्यत्वे चेति चार्थः ॥

## पृथिव्युदकज्वलनपवनात्ममनसामनेकत्वापरजातिमत्त्वे ॥

पृथिव्यादीनां द्रव्याणामेव परस्परसाधर्म्यं वैधर्म्यं च प्रतिपादयन्नाह । पृथिव्युदकज्वलनपवनात्ममनसामिति । अनेकत्वं प्रत्येकं व्यक्तिभेदः । अपरजातिमत्त्वमिति पृथिवीत्वादिजातिसम्बन्धित्वम् ॥

## क्षितिजलज्योतिरनिलमनसां क्रियावत्त्वमूर्तत्वपरत्वापरत्ववेगवत्त्वानि ॥

क्षितिजलज्योतिरनिलमनसां क्रियावत्त्वमूर्तत्वपरत्वापरत्ववेगवत्त्वानीति (२) । क्रियावत्त्वमुत्क्षेपणादिक्रियायोगः । मूर्तत्वमवच्छिन्नपरिमाणयोगित्वम् । परत्वापरत्ववेगवत्त्वानि परत्वापरत्ववेगसमवायः । संयुक्तसंयोगा-

---

(१) कारणेनाविनाशः-पा० २ । ४ पु० ।
(२) परापरवेगवत्त्वानीति-पा० ४ पु० ।

ल्पीयस्त्वभूयस्त्वयोरेव परापरव्यवहारहेतुत्वात् परत्वापरत्वे न स्त इति केचित् न भिन्नदिक्सम्बन्धिनोः सत्यपि संयुक्तसंयोगाल्पीयस्त्वभूयस्त्वसद्भावे सत्यपि च द्रष्टुः शरीरापेक्षया सन्निकृष्टविप्रकृष्टबुद्ध्योरुत्पादे परापरप्रत्ययाभावात् । एकस्यां दिश्यवस्थितयोः पिण्डयोस्तथाप्रत्यय इति चेत् अस्ति तर्हि संयोगाल्पीयस्त्वभूयस्त्वाभ्यां विषयान्तरं विषयवैलक्षण्यमन्तरेण विलक्षणाया बुद्धेरनुत्पादात् । वेगोपि गुणान्तरं न क्रियासन्ततिमात्रं मन्दगतौ वेगप्रतीत्यभावात् क्रियाक्षणानामाशूत्पादनिमित्तो वेगव्यवहार इति चेन्न अलातचक्रादिषु क्रियाक्षणानां निरन्तरोत्पादव्ययवतां प्रत्येकमन्तराग्रहणेनाशूत्पादस्य प्रत्यक्षेणाप्रतीतेः वेगप्रत्ययस्य च भावात् व्यक्ता च लोके क्रियावेगयोर्भेदावगतिः वेगेन गच्छतीति प्रतीतेः ॥

**आकाशकालदिगात्मनां सर्वगतत्वं परममहत्त्वं सर्वसंयोगिसमानदेशत्वं च(१) ॥**

आकाशकालदिगात्मनां सर्वगतत्वमित्यादि । सर्वशब्देनात्र प्रकृतापेक्षयानन्तरोक्तानि मूर्तद्रव्याणि परामृश्यन्ते । सर्वगतत्वं सर्वैर्मूर्तैः सह संयोगः आकाशादीनां न तु सर्वत्र गमनं तेषां निष्क्रियत्वात् । परममहत्त्वमियत्तानवच्छिन्नपरिमाणयोगित्वम् । सर्वसंयोगिसमानदेशत्वं सर्वेषां संयोगिनां मूर्तद्रव्याणामाकाशः समानो देश एक आधार इत्यर्थः । एवं दिगादिष्वपि व्याख्येयम् । यद्यप्याकाशादिकं सर्वेषां संयोगिनामाधारो न भवत्याधारभावेनानवस्थानात् । तथापि सर्वसंयोगाधारत्वात् सर्वसंयोगिनामाधार इत्युच्यते उपचारात् । अत एव सर्वगतत्वमित्यनेनापुनरुक्तता । तत्र हि सर्वैः सह संयोगोस्तीत्युक्तम् । इह तु सर्वेषामाधार इत्युच्यते ॥

**पृथिव्यादीनां पञ्चानामपि भूतत्वेन्द्रियप्रकृतित्वबाह्यैकैकेन्द्रियग्राह्यविशेषगुणवत्त्वानि ॥**

पृथिव्यादीनामाकाशान्तानामितरवैधर्म्येण साधर्म्यं कथयति । पृथिव्यादीनामिति । भूतत्वं भूतशब्दवाच्यत्वं एकनिमित्तमन्तरेणानेकेषु पृथिव्यादिष्वेकशब्दप्रवृत्तिरक्षशब्दवत् यथा देवनत्वेन्द्रियत्वविभीतकत्वसामान्यत्रय-

(१) चेति-पा॰ ५ पु॰ ।

योगाद्देवनादिष्वक्षशब्दः सङ्केतितः तथा पृथिवीत्वादिसामान्यवशात् पृथिव्यादिषु चतुर्षु भूतशब्दः सङ्केतितः आकाशे तु व्यक्तिनिमित्त एव भूतं भूतमिति तच्छब्दानुविद्धः प्रत्ययस्तच्छब्दवाच्यतोपाधिकृत यथा देवनादिष्वेकोऽक्ष इतिप्रत्ययः । इन्द्रियप्रकृतित्वमिन्द्रियस्वभावत्वं न भूतस्वभावानीन्द्रियाणि अप्राप्यकारित्वात् प्राप्यकारित्वं हि भौतिको धर्मो यथा प्रदीपस्येति केचित् । तदयुक्तम् । व्यवहितानुपलब्धेः यदीन्द्रियमप्राप्यकारि कुड्यादिव्यवहितमप्यर्थं गृह्णीयादप्राप्तेरविशेषात् । योग्यताभावाद्व्यवहितार्थाग्रहणमिति चेत् इन्द्रियस्य तावद्योग्यता विषयग्रहणसामर्थ्यमस्त्येव तदानीमव्यवहितार्थग्रहणात् विषयस्यापि योग्यता महत्त्वानेकद्रव्यवत्त्वरूपविशेषाद्यात्मिका व्यवधानेपि न निवृत्तैव आर्जवावस्थानमपि तदवस्थमेव । अथ मतं आवरणाभावोऽप्यर्थप्रतीतिकारणं संयोगाभाव इव पतनकर्मणि आवरणे सत्यावरणाभावो निवृत्त इति प्रतीतिरनुत्पत्तिः कारणाभावादिति । नैतत्सारम् । आवरणस्य स्पर्शवद्द्रव्यप्राप्तिप्रतिषेधभावोपलब्धेः छत्रादिकं हि पततो जलस्य सावित्रस्य च तेजसः प्रतिषेधति(१) न तु स्वस्याभावमात्रं निवर्तयति तथा सति सुलभमेतदनुमानं प्राप्तप्रकाशकं चक्षुर्व्यवहितार्थाप्रकाशकत्वात् प्रदीपवत् बाह्येन्द्रियत्वात् त्वगिन्द्रियवत् । नन्वेवं तर्हि विप्रकृष्टार्थग्रहणं कुतः रश्म्यर्थसन्निकर्षात् अनुद्भूतरूपस्पर्शा नायना रश्मयो दूरे गत्वा सन्तमर्थं गृह्णन्ति । अत एव महदणुप्रकाशकत्वात् किमिन्द्रियस्य(२) भौतिकत्वं न सिद्ध्यति प्रदीपस्येव रश्मिद्वारेण तदुपपत्तेः यत्र च रश्मयो भूयोभिः स्वावयवैः सहार्थावयविना तदवयवैश्च सह सम्बद्ध्यन्ते । तत्राशेषविशेषास्कन्दितस्यार्थस्य ग्रहणात् स्पष्टं(३) ग्रहणं यत्र त्ववयवमात्रेण सम्बन्धस्तत्र सामान्यमात्रविशिष्टस्य धर्मिणो ग्रहणादस्पष्टं ग्रहणम् । यद् गच्छति तत्सन्निहितव्यवहितार्थौ क्रमेण प्राप्नोति तत्कथं शाखाचन्द्रमसोस्तुल्यकालोपलब्धिरिति चेत् इन्द्रियवृत्ते(४)राशुसञ्चारित्वात् पलाशशत(५)व्यतिभेदवत् क्रमाग्रहणनिमित्तोयं भ्रमो न तु वास्तवं यौगपद्यम् । ननु प्राप्तिपक्षे सान्तरालोयमिति

(१) भजे शम्भोश्चरणयोरितिवत् । (२) प्रकाशकत्वादिन्द्रियस्या–पा॰ २ । ४ पु॰ ।
(३) दृष्टं–पा॰ २ पु॰ । (४) इन्द्रियजातेः–पा॰ २ । ४ पु॰ ।
(५) उत्पलशत–पा॰ २ । ४ पु॰ ।

ग्रहणं न स्यात् नान्यथा तदुपपत्तेः इन्द्रियसम्बन्धस्यातीन्द्रियत्वान्न तद्भावाभावकृतौ सान्तरनिरन्तरप्रत्ययौ किं तु शरीरसम्बन्धभावाभावकृतौ यत्र शरीरसम्बद्धस्यार्थस्य ग्रहणं तत्र निरन्तरोयमितिप्रत्ययः यत्र तु तदसम्बद्धस्य ग्रहणं तत्र सान्तर इति। बाह्यैकैकेन्द्रियग्राह्यविशेषगुणवत्त्वानीति। बाह्यैकैकेन्द्रियेण चक्षुरादिना ग्राह्या ये विशेषगुणा रूपादयस्तैस्तद्वत्ता पृथिव्यादीनामिति। अन्तःकरणग्राह्यत्वमप्येषां गुणानामस्ति ततश्चैकैकेन्द्रियग्राह्यत्वमसिद्धं तदर्थं बाह्यग्रहणम्। एकैकग्रहणं स्वरूपकथनार्थम्॥

## चतुर्णां द्रव्यारम्भकत्वस्पर्शवत्त्वे॥

चतुर्णां द्रव्यारम्भकत्वस्पर्शवत्त्वे। चतुर्णां पृथिव्युदकानलानिलानां द्रव्यारम्भकत्वं द्रव्यं प्रति समवायिकारणभावः स च निजा शक्तिरेव। स्पर्शवत्त्वं स्पर्शसमवायः॥

## त्रयाणां प्रत्यक्षत्वरूपवत्त्वद्रवत्वानि (१)॥

त्रयाणां प्रत्यक्षत्वरूपवत्त्वद्रवत्वानि। त्रयाणां क्षित्युदकतेजसां प्रत्यक्षत्वमिन्द्रियजज्ञानप्रतिभासमानता न तु महत्त्वादिकारणयोगः रूपवत्त्वमित्यस्य पुनरुक्तत्वप्रसङ्गात्। नन्वात्मनोपि प्रत्यक्षत्वमस्ति सत्यं बाह्येन्द्रियापेक्षया त्रयाणामित्युक्तम्। तथा रूपवत्त्वं रूपसमवायः। द्रवत्वं द्रवत्वं नाम गुणान्तरम्॥

## द्वयोर्गुरुत्वं रसवत्त्वं च॥

द्वयोर्गुरुत्वम्। द्वयोः पृथिव्युदकयोर्गुरुत्वं नाम गुणान्तरम्। तस्य भावात् पृथिव्यामुदके च गुरुशब्दनिवेशः। रसवत्त्वं च रससमवायः न केवलं तयोः(२)र्गुरुत्वं रसवत्त्वं चेति चार्थः॥

## भूतात्मनां वैशेषिकगुणवत्त्वम्॥

भूतात्मनां वैशेषिकगुणवत्त्वम्। भूतानां पृथिव्यप्तेजोवायुनभसामात्मनां वैशेषिकगुणयोगः। विशेषो व्यवच्छेदः विशेषाय स्वाश्रयस्येतरेभ्यो व्यवच्छेदाय प्रभवन्तीति वैशेषिका रूपादयस्तद्योगो भूतात्मनाम्॥

---

(१) द्रवत्ववत्त्वानि-पा० ५ पु०। (२) द्वयो-पा० १। २ पु०।

**क्षित्युदकात्मनां चतुर्दशगुणवत्त्वम् ॥**

क्षित्युदकात्मनां चतुर्दशगुणवत्त्वम् । क्षितेरुदकस्यात्मनां चतुर्दशगुणयोगः ॥

**आकाशात्मनां क्षणिकैकदेशवृत्तिविशेषगुणवत्त्वम् ॥**

आकाशात्मनां च क्षणिकैकदेशवृत्तिभिर्विशेषगुणैः सह योगो विद्यते इत्याह । आकाशात्मनामिति । विशेषगुणाः पृथिव्यादीनामपि सन्ति तन्निवृत्त्यर्थमेकदेशवृत्तिग्रहणं ये च ते आकाशात्मनामव्याप्यवृत्तयो विशेषगुणाः तेषामाशुतरविनाशित्वं च स्वरूपमस्तीति क्षणिकसङ्कीर्तनं कृतम् ॥

**दिक्कालयोः पञ्चगुणवत्त्वं सर्वोत्पत्तिमतां निमित्तकारणत्वं च ॥**

संख्यापरिमाणपृथक्त्वसंयोगविभागाः पञ्चैव गुणा दिशि काले च वर्तन्ते इत्याह । दिक्कालयोरिति । न केवलमनयोः पञ्चगुणवत्त्वं साधर्म्यं सर्वोत्पत्तिमतां निमित्तकारणत्वं च साधर्म्यम् । ननु दिक्कालौ सर्वेषामुत्पत्तिमतां निमित्तमिति कुत एतत् प्रत्येतव्यं यदि सन्निधिमात्रेणाकाशस्यापि कारणत्वं स्यात् अथ तद्व्यपदेशात् सोऽप्यनैकान्तिको गृहे जातो गोष्ठे जात इत्यनिमित्तेऽपि दर्शनात् । अत्रोच्यते । अस्ति तावत् तन्त्वादिप्रतिनियमात् पटाद्युत्पत्तिवद्देशविशेषनियमात् कालविशेषनियमाच्च सर्वेषामुत्पत्तिः यदि देशकालविशेषावपि न कारणं यत्र क्वचन हेतवः कार्यं कुर्युरविशेषात् सर्वदा सर्वत्र कारणाभावात् कार्यानुत्पत्तिरिति चेत् यत्र देशे काले च कारणानि भवन्ति तत्र तेषां जनकत्वं नान्यत्रेत्यभ्युपेतव्यं विशिष्टदेशकालयोरङ्गत्वं कार्यजननाय तयोः कारणैरपेक्षणीयत्वात् । इदमेव च देशस्य कालस्य च निमित्तत्वं यदेकत्र कार्योत्पत्तिरन्यत्रानुत्पत्तिरिति ॥

**क्षितितेजसोर्नैमित्तिकद्रवत्वयोगः ॥**

क्षितितेजसोर्नैमित्तिकद्रवत्वयोगः । निमित्तादुपजातं नैमित्तिकं च तद्द्रवत्वं चेति नैमित्तिकद्रवत्वं तेन सह क्षितितेजसोर्योगः (१) पार्थिवस्य

(१) क्षितितेजसोः संयोगः—पा॰ १ पु॰ ।

सर्पिरादेस्तैजसस्य च सुवर्णरजतादेरग्निसंयोगेन विलयनात् गुरुत्ववत्पार्थिवमेव द्रवत्वं दह्यमानेषु सुवर्णादिषु संयुक्तसमवायात् प्रतीयते इति चेन्न पार्थिवद्रवत्वस्यात्यन्तमग्निसंयोगेन भस्मीभावोपलब्धेरस्य च तदभावात्। अत एव सुवर्णादिकमपि पार्थिवमेवेति कस्यचित्प्रवादोपि प्रत्युक्तः पार्थिवत्वे सति सर्पिरादिवदत्यन्तवह्निसंयोगेन द्रवत्वोच्छेदप्रसङ्गात् । यदपीदमुक्तं पार्थिवं सुवर्णादिकं सांसिद्धिकद्रवत्वाभावे सति गुरुत्वाधिकरणत्वाल्लोष्ठादिवत्। तदप्यसारम्। किं तत्र गुरुत्वस्योपलब्धिः तद्गुणत्वादुतान्यगुणत्वेपि घृतादिष्वपि स्नेहवत्स्वाश्रयप्रत्यासत्तिनिमित्तादितिसंशयस्यानिवृत्तेः यदपि साधनान्तरं परप्रकाश्यमानत्वादिति तदप्यनुद्भूतरूपवत्त्वेनाप्युपपत्तेरसाधनं दिङ्मात्रमस्माभिरुपदिष्टम् ॥

अनेनैव न्यायेन सर्वत्र पदार्थे ऽन्यदपि साधर्म्यं स्वयं वाच्यम् विपर्ययादितरव्यावृत्तेर्वैधर्म्यं वाच्यमिति शिष्यानाह । एवमिति ॥

**एवं सर्वत्र साधर्म्यं विपर्ययाद्वैधर्म्यं (१) च वाच्यमिति द्रव्यासङ्करः (२) ॥**

अनुद्दिष्टेषु पदार्थेषु न तेषां लक्षणानि प्रवर्तन्ते निर्विषयत्वात् अलक्षितेषु च तत्त्वप्रतीत्यभावः कारणाभावात् अतः पदार्थव्युत्पादनाय प्रवृत्तस्य शास्त्रस्योभयथा प्रवृत्तिः उद्देशो लक्षणं च परीक्षायास्तु नियमः । यत्राभिहिते लक्षणे प्रवादान्तरव्याक्षेपात् तत्त्वनिश्चयो न भवति तत्र परपक्षव्युदासार्थं परीक्षाविधिरधिक्रियते । यत्र तु लक्षणाभिधानसामर्थ्यादेव तत्त्वनिश्चयः स्यात् तत्रायं व्यर्थो नार्थ्यते योपि हि त्रिविधां शास्त्रस्य प्रवृत्तिमिच्छति तस्यापि प्रयोजनादीनां नास्ति परीक्षा तत्कस्य हेतोर्लक्षणमात्रादेव ते प्रतीयन्ते इति । एवं चेदर्थप्रतीत्यनुरोधाच्छास्त्रस्य प्रवृत्तिर्न त्रिधैव । नामधेयेन पदार्थानामभिधानमुद्देशः उद्दिष्टस्य स्वपरजातीयव्यावर्तको धर्मो लक्षणं लक्षितस्य यथालक्षणं विचारः परीक्षा । उद्दिष्टविभागस्तु न विधान्तरमुद्देशलक्षणेनैव संगृहीतत्वात् तथाहि पृथगुच्यते एतान्येवेति नियमार्थे विशेषल-

---

(१) सर्वत्र विपर्ययात् साधर्म्यं वैधर्म्यं–पा॰ ५ पु॰ ।
(२) द्रव्यासङ्कर इति ५ पु॰ नास्ति ।

लक्षणप्रवृत्त्यर्थं च विभक्तेषु पदार्थेषु तेषां विशेषलक्षणानि भवन्ति अन्यथा तानि निर्विषयाणि स्युः तत्र द्रव्याणि द्रव्यगुणकर्मेत्युद्दिष्टानि पृथिव्यप्तेज इति विभक्तानि सम्प्रति तेषां विशेषलक्षणार्थं प्रकरणमारभ्यते॥

**इहेदानीमेकैकशो वैधर्म्यमुच्यते॥**

इहेदानीमिति। पूर्वं द्वयोर्बहूनां परस्परापेक्षया वैधर्म्यमुक्तम्। इह वक्ष्यमाणे प्रकरणे सम्प्रत्येकैकस्य द्रव्यस्य व्यावर्तको धर्मः कथ्यते। एकैकश इति शस्प्रत्ययाद्वीप्सात्यन्तबहुव्याप्तिप्रदर्शनार्था उद्देशक्रमेण पृथिव्याः प्रथमं वैधर्म्यमाह(१)॥

**पृथिवीत्वाभिसम्बन्धात् पृथिवी। रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वसंस्कारवती। एते च गुणविनिवेशाधिकारे रूपादयो गुणविशेषाः सिद्धाः। चाक्षुषवचनात् सप्त संख्यादयः। पतनोपदेशाद्गुरुत्वम्। अद्भिः सामान्यवचनाद् द्रवत्वम्। उत्तरकर्मवचनात् संस्कारः(२)। क्षितावेव गन्धः। रूपमनेकप्रकारं(३) शुक्लादि। रसः षड्विधो मधुरादिः। गन्धो द्विविधः सुरभिरसुरभिश्च। स्पर्शोऽस्या(४) अनुष्णाशीतत्वे सति पाकजः। सा तु(५) द्विविधा। नित्या चानित्या च। परमाणुलक्षणा नित्या। कार्यलक्षणा त्वनित्या। सा च स्थैर्याद्यवयवसन्निवेशविशिष्टाऽपरजातिबहुत्वोपेता शयनासनाद्यनेकोपकारकरी च। त्रिविधं चास्याः कार्यम्। शरीरेन्द्रियविषयसञ्ज्ञकम्। शरीरं(६) द्विविधम्। योनिजमयोनिजं च। तत्रायोनिजमनपेक्ष्य शु-**

---

(१) इतरव्यावर्तकं व्यवहारसाधकमसाधारणधर्ममाहेत्यर्थः।

(२) संस्कार इति–पा॰ ५ पु॰।

(३) प्रकारकं–पा॰ ५ पु॰।

(४) अस्या इति नास्ति ५ पु॰।

(५) सा च–पा॰ ५ पु॰।

(६) तत्र शरीरं–पा॰ ५ पु॰।

**क्रशोणितं देवर्षीणां शरीरं धर्मविशेषसहितेभ्योऽणुभ्यो जायते। क्षुद्रजन्तूनां यातनाशरीराण्यधर्मविशेषसहितेभ्योऽणुभ्यो जायन्ते। शुक्रशोणितसन्निपातजं योनिजम्। तद्द्विविधं(१) जरायुजमण्डजं च। मानुषपशुमृगाणां जरायुजम्। पक्षिसरीसृपाणामण्डजम्। इन्द्रियं गन्धव्यञ्जकं सर्वप्राणिनां जलाद्यनभिभूतैः पार्थिवावयवैरारब्धं घ्राणम्। विषयस्तु द्व्यणुकादिक्रमेणा(२)रब्धस्त्रिविधो मृत्पाषाणस्थावरलक्षणः। तत्र भूप्रदेशाः प्राकारेष्टकादयो मृत्प्रकाराः(३)। पाषाणा उपलमणिवज्रादयः। स्थावरास्तृणौषधिवृक्ष(४)लतावतानवनस्पतय इति॥**

पृथिवीत्वाभिसम्बन्धात् पृथिवी। यो हि पृथिवीं स्वरूपतो जानन्नपि कुतश्चिद्व्यामोहात् पृथिवीति न व्यवहरति तं प्रति विषयसम्बन्धाव्यभिचारेण व्यवहारसाधनार्थमसाधारणो धर्मः कथ्यते। पृथिवीत्वाभिसम्बन्धात् पृथिवीति। इयं पृथिवीति व्यवहर्तव्या पृथिवीत्वाभिसम्बन्धात् यत् पुनः पृथिवीति न व्यवह्रियते न तत् पृथिवीत्वेनाभिसम्बद्धं(५) यथाबादिकम्। न चेयं पृथिवीत्वेन नाभिसम्बद्धा तस्मात् पृथिवीति व्यवहर्तव्येति। यो वा पृथिवीति लोके शृणोति न जानाति च तस्याः स्वरूपं कीदृगिति तं प्रति तस्याः स्वपरजातीयव्यावृत्तस्वरूपप्रतिपादनार्थमसाधारणो धर्मः कथ्यते या लोके पृथिवीति व्यपदिश्यते सा पृथिवी पृथिवीत्वाभिसम्बन्धात्। यथाहोद्द्योतकरः(६) समानासमानजातीयव्यवच्छेदो लक्षणार्थः। एतेनैतदपि प्रत्युक्तं प्रसिद्धाश्चेत् पदार्था न लक्षणीयाः अप्रसिद्धा न तरामशक्यत्वात्। स्वरूपेणावगतस्यापि व्यवहारविशेषप्रतिपादनार्थं सामान्येन प्रसिद्धस्य विशेषावगमार्थं च लक्षणप्रवृत्तेः। नन्वेवं सत्यनवस्था लक्ष्यवल्लक्षण-

---

(१) तत्तु द्विविधं—पा० ५ पु०। (२) द्व्यणुकादिप्रक्रमेण—पा० ५ पु०।
(३) मद्विकाराः—पा० ५ पु०। (४) स्थावरा वृक्षतृणौषधिगुल्म—पा० ५ पु०।
(५) पृथिवीत्वाभिसम्बद्धम्—पा० २ पु०। (६) उद्द्योतकरो न्यायवार्त्तिककारः।

स्याप्यत्यन्ततो लक्षणीयत्वादिति चेन्न अप्रतीतौ लक्षणापेक्षित्वात् सर्वेच चा-प्रतीत्यभावात् तथाहि शिरसा पादेन गवामनुबध्नन्ति विद्वांशः न पुनरेता-वप्यन्यतः समीक्ष्यन्ते यस्तु सर्वथैवाप्रतिपन्नो न तं प्रत्युपदेशः । तस्य बालमूकादिवदनधिकारात् । गन्धसहचरितचतुर्दशगुणवत्त्वमपि पृथिव्या इतरेभ्यो वैधर्म्यमिति प्रतिपादयन्नाह । रूपरसगन्धेति । अच द्वन्द्वानन्तरं मतुप्प्रत्यययोगात् प्रत्येकं रूपादीनां पृथिव्या सह सम्बन्धो लभ्यते। सूचकार-स्याप्येते गुणाः पृथिव्यामभिमता इत्याह । एते चेति । गुणानां विनिवेशो द्रव्येषु वृत्तिः सा प्रतिपाद्यते ऽनेनाधिक्रियते ऽस्मिन्निति गुणविनिवेशाधिकारो द्वितीयोऽध्यायः तस्मिन् रूपरसगन्धस्पर्शाः पृथिव्यां सिद्धाः सूचकारेण प्रतिपादिताः रूपरसगन्धस्पर्शवती पृथिवीति । चाक्षुषवचनात् सप्त संख्या-दयः । संख्या परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपि-द्रव्य(१)समवायाच्चाक्षुषाणीति चाक्षुषवचनाद्रूपवत्यां पृथिव्यां संख्यादयः सप्त सिद्धाः । यदि ते रूपिद्रव्येषु न सन्ति तत्समवाये तेषां प्रत्यक्षत्वं सूचकारेण नोक्तं स्यादित्यर्थः । पतनोपदेशाद् गुरुत्वमिति । संयोगप्रतियत्नाभावे गुरु-त्वात् पतनमित्युपदेशात् सूचकारेण पतनसम्बन्धिन्यां पृथिव्यां गुरुत्वमस्ती-त्यर्थात् कथितं व्यधिकरणस्याकरणत्वात्। अद्भिः सामान्यवचनाद् द्रवत्वम् । सर्पिर्जतुमधूच्छिष्टानां पार्थिवानामग्निसंयोगाद् द्रवत्वमद्भिः सामान्यमिति वचनात् पृथिव्यां नैमित्तिकं द्रवत्वमस्तीत्युक्तम् । मधूच्छिष्टशब्देन सिक्थस्या-भिधानम्(२)। उत्तरकर्मवचनात् संस्कार इति । नोदनादाद्यमिषोः कर्म तत्क-र्मकारिताच्च संस्कारात् तथोत्तरमुत्तरं चेति सूचकारेण इषौ पार्थिवद्रव्ये कर्म-हेतुः संस्कार इतिदर्शयता पृथिव्यां वेगोस्तीति ज्ञापितम् (३) अविद्यमानस्या-हेतुत्वात्। यथा चैक एव संस्कार आपतनात् तथोपपादयिष्यामः(४)। क्षिताविव गन्धः । अयमस्यार्थः केवल एवायमसाधारणधर्म इति । सुगन्धि सलिलं सुगन्धिः समीरण इति प्रत्ययाद् द्रव्यान्तरेपि गन्धोऽस्तीति चेन्न। पार्थिवद्रव्य-समवायेन तद्गुणोपलब्धेः कथमेष निश्चय इति चेत् तदभावे ऽनुपलम्भात् यद्यपि रूपं त्रयाणां तथाप्यवान्तरभेदापेक्षया तदपि पृथिव्या एव वैधर्म्यमाह ।

(१) रूपवद्द्रव्य-पा· १ पु· ।
(२) सिक्थकाभिधानम्-पा· १ पु· ।
(३) गम्यते-पा· २ पु· ।
(४) कर्मपदार्थनिरूपणे ।

रूपमनेकप्रकारमिति । अत्रापि चितावेवेत्यनुसन्धानीयम् । शुक्लपीताद्यनेकविधं रूपं चितावेव नान्यत्रेत्यर्थः । एकस्यां पृथिवीजातौ नानारूपाणि व्यक्तिभेदेन समवयन्ति । क्वचिदेकस्यामपि व्यक्तावनेकप्रकाररूपसमावेशः यत्र नानाविधरूपसम्बन्धिभिरवयवैरवयव्यारभ्यते । कथमेतदिति चेदुच्यते । यथावयवैरवयव्यारब्धस्तथावयवरूपैरवयविनि रूपमारब्धव्यम् अवयवेषु च न शुक्लमेव रूपमस्ति नापि श्याममेव किन्तु श्यामशुक्लहरितादीनि न च तेषामेकं रूपमेवारभते नापराणीत्यस्ति नियमः प्रत्येकमन्यत्र सर्वेषामपि सामर्थ्यदर्शनात् । न च परस्परं विरोधेन सर्वाण्यपि नारभन्त एवेत्यपि युक्तम् । चित्ररूपस्यावयविनः प्रतीतेररूपस्य द्रव्यस्य प्रत्यक्षत्वाभावाच्च । न चावयवरूपाणि समुच्चितान्यत्र चित्रधिया प्रतीयन्ते तेनैवावयवी प्रत्यक्ष इति कल्पनायामन्यत्रापि तथाभावप्रसङ्गेनावयविरूपोच्छेदप्रसङ्गः तस्मात् सम्भूय तैरारभ्यते तच्चारभ्यमाणं विविधकारणस्वभावानुगमाच्छ्यामशुक्लहरितात्मकमेव स्याच्चित्रमिति च व्यपदिश्यते । विरोधादेकमनेकस्वभावमयुक्तमिति चेत् तथा च प्रावादुकप्रवादः । एकं च चित्रं चेत्येतत्तच्च चित्रतरं तत इति । को विरोधो नीलादीनां न तावदितरेतराभावात्मको भावस्वभावानुगमात् अन्योन्यसंश्रयापत्तेश्च स्वरूपान्यत्वं विरोध इति चेत् सत्यमस्त्येव तथापि चित्रात्मनो रूपस्य नायुक्तता विचित्रकारणसामर्थ्यभाविनस्तस्य सर्वलोकप्रसिद्धेन प्रत्यक्षेणैवोपपादितत्वात् अचित्रे पार्श्वे पटस्यैव तदाश्रयस्य चित्ररूपस्य ग्रहणप्रसङ्गः तस्यैकत्वादिति चेन्न अन्वयव्यतिरेकाभ्यां समधिगतसामर्थ्यस्यावयवनानारूपदर्शनस्यापि चित्ररूपग्रहणहेतुत्वात् तस्य च पार्श्वान्तरेऽभावात् । नन्वेवं तर्हि नानारूपैर्द्व्यणुकैरारब्धे द्रव्ये न चित्ररूपग्रहणं तदवयवरूपग्रहणाभावात् को नामाह न तथेति । न हि परमसूक्ष्मस्य वस्तुनो रूपं विविच्य गृह्यते यस्य तु विविच्य गृह्यते तस्यावयवरूपाण्यपि गृह्यन्ते । यस्त्वव्यापकानि बहूनि चित्ररूपाणीति मन्यते तस्य नीलपीताभ्यामारब्धे द्वितन्तुके रूपानुत्पत्तिरेकैकस्यावयवरूपस्यानारम्भकत्वात् । अथ मतं तयोभाभ्यामेकं चित्रं रूपमारभ्यते तदन्यत्रापि तथा स्यादविशेषात् विवादाध्यासितं चित्रद्रव्यं एकरूपद्रव्यसम्बन्धिद्रव्यत्वात् इतरद्रव्यवत् तद्गतं रूपमेकमवयविरूपत्वात् इतरावयविद्रव्यरूपवत् । रसः षड्विध इत्यत्रापि पूर्ववद्व्याख्यानम् । यद्ग्रन्थस्य

भेदनिरूपणं तत्पारम्पर्येण पृथिव्या एव स्वरूपकथनमित्यभिप्रायेणाह । गन्धो द्विविध इति । तदेव द्वैविध्यं दर्शयति । सुरभिरसुरभिश्चेति । असुरभिरिति सुरभिगन्धविरुद्धं प्रतिद्रव्यादिसमवेतं प्रतिकूलसंवेदनीयं गन्धान्तरं न तु तदभावमात्रं विधिरूपेण सातिशयतया च संवेदनात् । उपेक्षणीयस्तु गन्धोऽनुद्भूतसुरभ्यसुरभिप्रभेद एवेति पृथङ्नोच्यते । अथवा सोप्यसुरभिरेव सुरभिगन्धादन्योऽसुरभिरिति व्युत्पादनात् । यथाभूतः स्पर्शोऽस्या वैधर्म्यं तथा दर्शयति । स्पर्शोऽस्या इति । पाकजः स्पर्शः पृथिव्या वैधर्म्यं तस्य स्वरूपकथनमनुष्णाशीत इति । यद्यपि स्पर्शवत् पाकजौ रूपरसावप्यस्या वैधर्म्यं तथापि रूपरसयोः पाकजत्वानभिधानम् अन्यथापि तयोर्वैधर्म्यस्य सम्भवाद्वैधर्म्यमात्रप्रतिपादनस्यैव विवक्षितत्वात् अप्रतीयमानपाकजेषु स्तम्भादिषु([१]) स्पर्शस्य पाकजत्वमनुमानात् स्तम्भादिषु स्पर्शः पाकजः पार्थिवस्पर्शत्वाद् घटादिस्पर्शवत् घटादिस्पर्शस्यापि पाकजत्वमेकेन्द्रियग्राह्यत्वे सति तद्गुणत्वात् तद्गतरूपवत् । अवान्तरभेदनिरूपणार्थमाह । नित्या चानित्या चेति । प्रकारान्तराभावसंसूचनार्थौ चशब्दौ । का नित्या का चानित्येत्याह । परमाणुलक्षणा नित्या कार्यलक्षणा त्वनित्येति । उभयत्रापि लक्षणशब्दः स्वभावार्थः । परमाणुस्वभावायाः पृथिव्याः सत्त्वे किं प्रमाणमनुमानम् अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यत्वान्महत्परिमाणतारतम्यवत् । यत्रेदं विश्रान्तं यतः([२]) परमाणुर्नास्ति स परमाणुः । अत एव नित्यो द्रव्यत्वे सत्यनवयवत्वादाकाशवत् अथायं सावयवो न तर्हि परमाणुः कार्यपरमाणोरपेक्षया तदवयवपरिमाणस्य लोके ऽल्पीयस्त्वप्रतीतेः यश्च तस्यावयवः स परमाणुर्भविष्यति अथ सोपि न भवति अवयवान्तरसद्भावात् एवं तर्ह्यनवस्था ततश्चावयविनामल्पतरतमादिभावो न स्यात् सर्वेषामनन्तकारणजन्यत्वाविशेषेण परिमाणप्रकर्षाप्रकर्षहेतोः([३]) कारणसंख्याभूयस्त्वाभूयस्त्वयोरसम्भवात् । अस्ति तावदयं परिमाणभेदः तस्मादणुपरिमाणं क्वचिन्निरतिशयमिति सिद्धो नित्यः परमाणुः स चैको नारम्भकः एकस्य नित्यस्य

---

(१) स्तम्भादिषु—इति नास्ति २ पु० ।		(२) यतोऽन्यः—पा० २ । ४ पु० ।

(३) प्रमाणप्रकर्षापकर्ष—पा० २ पु० ।

चारम्भकत्वे कार्यस्य सततोत्पत्तिः स्यादपेक्षणीयाभावात् । अविनाशित्वं च प्रसज्येत । आश्रयविनाशस्यावयवविभागस्य च विनाशहेतोरभावात् । त्रयाणामप्यारम्भकत्वमयुक्तम् । इह महत्कार्यद्रव्यस्योत्पत्तौ स्वपरिमाणापेक्षयाल्पपरिमाणस्य कार्यद्रव्यस्यैव सामर्थ्यदर्शनात् । त्र्यणुकं कार्यद्रव्येणैव जन्यते महत्परिमाणत्वाद् घटवत् । एवं त्रयाणामेकस्य चारम्भकत्वे प्रतिक्षिप्ते द्वाभ्यामेव परमाणुभ्यामारभ्यते यत्तद् द्व्यणुकमिति सिद्धम् । द्व्यणुकैर्बहुभिरारभ्यते इत्यपि नियमो न द्वाभ्यां तस्याणुपरिमाणोत्पत्तौ कारणसद्भावेनाणुत्वो(१)त्पत्तावारम्भवैयर्थ्यात् बहुषु त्वनियमः । कदाचित् त्रिभिरारभ्यते इति त्र्यणुकमित्युच्यते कदाचिच्चतुर्भिरारभ्यते कदाचित्पञ्चभिरिति यथेष्टं कल्पना । न च कार्यस्य व्यर्थता यथा यथा कारणसंख्याबाहुल्यं तथा तथा महत्परिमाणतारतम्योपलम्भात् न चैवं सति द्व्यणुकानामेव घटारम्भकत्वप्रसक्तिः घटस्य भङ्गे ऽल्पतरतमादिभागदर्शनेन तथैवारम्भकल्पनात् तदेवं द्व्यणुकादिप्रक्रमेण क्रियते कार्यलक्षणा पृथिवी सा चानित्या कारणविभागस्याश्रयविनाशस्य च हेतोः सम्भवात् । कार्यलक्षणायाः पृथिव्या अनित्यत्वेन सह धर्मान्तरं समुच्चिन्वन्नाह । सा चेति । स्थैर्यं निविडत्वम् । आदिशब्दात् प्रशिथिलत्वादिपरिग्रहः । अवयवानां सन्निवेशोऽवयवसंयोगविभागविशेषः स्थैर्यादयश्चावयवसन्निवेशाश्च तैर्विशिष्टा अपरजातिबहुत्वोपेता गोत्वादिजातिभूयस्त्वयुक्तेत्यर्थः । परमाण्वादिष्वपरजात्यभावेप्यदृष्टवशात् तथा तथा तेषां व्यूहो यथा यथा तदारब्धेष्वपरजातयो व्यज्यन्ते । नन्वदृष्टकारिता सर्वभावानां सृष्टिः कार्यलक्षणा पृथ्वी कामर्थक्रियां पुरुषस्य जनयति येनेयमदृष्टेन क्रियते इत्यत आह । शयनासनेति । शयनासनाद्य अनेक उपकारास्तत्कारिणी कार्यलक्षणेति । कार्यान्तरं त्वस्याः समुच्चिनोति । त्रिविधमिति । कार्यत्रैविध्यमेव दर्शयति । शरीरेत्यादि । शरीरमिन्द्रियं विषय इति संज्ञा यस्य कार्यस्य तत्तथा । भोक्तुर्भोगायतनं शरीरं मृतशरीरे तद्योग्यत्वात्तद्व्यपदेशः । शरीराश्रयं ज्ञातुरपरोक्षप्रतीतिसाधनं(२) द्रव्यमिन्द्रियम् । शरीरेन्द्रियव्यतिरिक्तमात्मोपभोगसाधनं द्रव्यं विषयः । शरीरभेदं कथयति । योनिजमयोनिजं

---

(१) अणुतो-पा० २ पु० । (२) प्रत्यक्षसाधनमित्यर्थः ।

चेति। शुक्रशोणितसन्निपातो योनिः तस्माज्जातं योनिजं तद्विपरीतमयोनिजं तदेव दर्शयति। तत्रायोनिजमिति। तयोर्योनिजायोनिजयोर्मध्ये अयोनिजं शरीरं शुक्रशोणितमनपेक्ष्य जायते। केषामित्यत आह। देवर्षीणामिति। देवानां च ऋषीणां चेत्यर्थः। अन्वयव्यतिरेकावधारितकारणभावस्य शुक्रशोणितस्याभावे कथं शरीरस्योत्पत्तिरित्यत आह। धर्मविशेषसहितेभ्य इति। विशिष्यते इति विशेषः धर्म एव विशेषः धर्मविशेषः प्रकृष्टो धर्मस्तत्सहितेभ्योऽणुभ्य इति। अयमभिसन्धिः शरीरारम्भे परमाणव एव कारणं न शुक्रशोणितसन्निपातः क्रियाविभागादिन्यायेन(१) तयोर्विनाशे सत्युत्पन्नपाकजैः परमाणुभिरारम्भात् न च शुक्रशोणितपरमाणूनां कश्चिद्विशेषः पार्थिवत्वाविशेषात्। अत्रापि कार्यं जातिनियमस्यादृष्ट एव हेतुः। एवं चेद्धर्मविशेषानुगृहीतेभ्यः परमाणुभ्योऽयोनिजशरीरोत्पत्तिर्नानुपपन्ना। ननु दृष्टस्तावत्सर्वत्र शरीरोत्पत्तौ शुक्रशोणितयोः पूर्वकालतानियमः(२) तेन यथा ग्राव्णोन्मज्जनाभ्युपगमस्तत्सदृशग्रावान्तरनिमज्जनग्राहकप्रमाणान्तरविरोधादनुपपन्नस्तद्वदयोनिजशरीराभ्युपगमोऽपि नैवं शुक्रादिनिरपेक्षस्यापि शलभादिशरीरस्य दर्शनात् विशिष्टसंस्थानस्य शरीरस्य शुक्रादिपूर्वतावगतेति चेत् सत्यं तथापि न नियमसिद्धिः किमदृष्टविशेषाभावादस्मदादिशरीरस्य शुक्रादिपूर्वता किं वा विशिष्टसंस्थानमात्रानुबन्धकृतेति सन्देहात्। एतेन बाधकानुमानमपि पर्युदस्तम्। तस्य व्याप्तिसन्देहात्। यच्चात्र वक्तव्यं तद्योगिप्रत्यक्षनिरूपणावसरे वक्ष्यामः। अधर्मविशेषेणाप्ययोनिजं शरीरं भवतीत्याह। क्षुद्रजन्तूनामिति। क्षुद्रजन्तवो दंशमशकादयस्तेषां यातना पीडा दुःखमिति यावत् तदर्थं शरीरं यातनाशरीरं तदधर्मविशेषसहितेभ्योऽणुभ्यो जायते। इदं त्विह लोकसिद्धमेव। योनिजं शरीरमाह। शुक्रशोणितसन्निपातजमिति। शुक्रं च शोणितं च तयोः सन्निपातः संयोगविशेषः तस्माज्जातं योनिजमित्युच्यते। पितुः शुक्रं मातुः शोणितं तयोः सन्निपातानन्तरं जठरानलसम्बन्धाच्छुक्रशोणितारम्भकेषु परमाणुषु पूर्वरूपादिविनाशे सति समानगुणान्तरोत्पत्तौ द्व्यणुकादिप्रक्रमेण कललशरीरोत्पत्तिस्तत्रान्तःकरणप्रवेशो न तु शुक्रशोणितावस्थायां शरीराश्रयत्वान्मनसः। तत्र

---

(१) क्रियाविभागन्यायेन-पा॰ २ पु॰। (२) पूर्वकारणता-पा॰ २ पु॰।

मातुराहाररसो मात्रया संक्रामति अदृष्टवशाच्च पुनर्जठरानलसम्बन्धात् कल-लारम्भकपरमाणुषु क्रियाविभागादिन्यायेन कललशरीरे नष्टे समुत्पन्नपाकजैः कललारम्भकपरमाणुभिरदृष्टवशादुपजातक्रियैराहारपरमाणुभिः सह सम्भूय शरीरान्तरमारभ्यते इत्येषा कल्पना शरीरे प्रत्यहं द्रष्टव्या। शरीरभेदे किं प्रमाणम्। परिमाणभेदः स्वल्पपरिमाणावच्छिन्ने आश्रये महत्परिमाणस्य परिसमाप्त्यभावात्। अवस्थान्तरापन्नं शरीरं तदाश्रयो भवतीति चेत् अवस्था-न्तरमाहारावयवसहकारिणः शरीरावयवा आरभेरन् शरीरं वा तत्सहकृतं उभयथापि पटादिषु तन्त्वादिवदन्ते हीनाधिकपरिमाणवदनेकशरीरोपलम्भः स्यात्। न चैवम्। तस्मात्पूर्वं प्रणष्टमपरं च शरीरमुपजातं विवादाध्यासिते परि-माणे भिन्नाश्रये हीनाधिकपरिमाणत्वात् घटशरावपरिमाणवत्। विवादाध्या-सितं परिमाणमाश्रयविनाशादेव विनश्यति परिमाणत्वात् मुद्गराभिहति([1])वि-नष्टघटपरिमाणवत्। प्रत्यभिज्ञानाच्छरीरैकत्वसिद्धिरिति चेन्न तस्य सादृश्य-विषयत्वेनाप्युपपत्तेः व्यक्तीनामव्यवधानोत्पादनेनान्तराग्रहणस्यात्यन्तिकसादृ-श्यस्य च भ्रान्तिहेतोः सर्वदा सम्भवे ज्वालादिव्यक्तिवन्नेदं तदिति बाधकानु-दयेपि युक्तिद्वारेण बाधकसम्भवात्। तस्य प्रकारं दर्शयति। द्विविधमिति। द्वे विधे प्रकारौ यस्य तद् द्विविधमिति व्याख्या। जरायुरिति गर्भाशयस्या-भिधानं तेन वेष्टितं जायते इति जरायुजम्। अण्डं बिम्बं तेन वेष्टितं जायते तदण्डजम्। केषां जरायुजं केषां चाण्डजमित्यत्राह। मानुषेत्यादि। मानुषा अस्मदादयः। पशवः छागाः। अग्नीषोमीयं पशुमालभेत सप्तदश प्राजापत्यान् पशूनालभेतेति दर्शनात्। मृगाः कृष्णसारादयः तेषां जरायुजं शरीरम्। इदं चोपलक्षणपरम्। अन्येषामपि चतुष्पदां जरायुजत्वात्। पक्षिणः प्रसिद्धाः। सरीसृपाः सर्पाः तेषामण्डजं शरीरम्। एतदपि न नियमार्थमन्ये-षामपि मत्स्यादीनामण्डजत्वात्। इन्द्रियमाह([2])। इन्द्रियमिति। सर्वप्रा-णिनां गन्धव्यञ्जकं गन्धोपलम्भकं यदिन्द्रियं तत्पार्थिवावयवैरारब्धम्। एतावता नियमो न लभ्यते यदेतदेव गन्धमभिव्यनक्ति नान्यत्पार्थिवं द्रव्यं तदर्थमाह। जलाद्यनभिभूतैः पार्थिवावयवैरारब्धं घ्राणम्। जलादिभिरनभिभू-

---

(१) मुद्गराभिहत-पा० १ पु०। (२) इन्द्रियस्वरूपनियमार्थमाह-पा० २। ४ पु०।

तै[1]रप्रतिहतसामर्थ्यैरवयवैरदृष्टवशादितरविलक्षणमारब्धमेतत् अतो विशिष्टोत्पादादिदमेव[2] गन्धाभिव्यक्तिसमर्थं नान्यदित्यर्थः । घ्राणमिति तस्य सञ्ज्ञा । आत्मा जिघ्रति गन्धमुपादत्ते ऽनेनेति कृत्वा तत्सद्भावे गन्धोपलब्धिरेव प्रमाणम् क्रियायाः करणसाध्यत्वात्[3] चक्षुरादिव्यापारे च तस्या अनुत्पादात् पार्थिवत्वेपि रूपादिषु मध्ये गन्धस्यैवाभिव्यञ्जकत्वं प्रमाणम् । कुङ्कुमगन्धाभिव्यञ्जकघृतवत् यथा घृतं स्वगन्धसहितमेव कुङ्कुमगन्धमभिव्यनक्ति तथा घ्राणमपि स्वगन्धसहितमेवेन्द्रियम् अतो न स्वगन्धस्य ग्राहकं तेनैव तस्याग्रहणात् यथा घ्राणस्य तथा रसनचक्षुस्त्वगिन्द्रियाणामपि वक्ष्यमाणेन दृष्टान्तबलेन रूपरसस्पर्शसहकृतानामेवेन्द्रियत्वानुमानान्न स्वगुणग्रहणम् । श्रोत्रं तु शब्दगुणमिन्द्रियम् । अतस्तेनैव शब्दोपलम्भः । शरीरेन्द्रियाभ्यां विषयस्य स्वरूपविशेषं तुशब्देन दर्शयन् भेदं दर्शयति । विषयस्त्विति । द्व्यणुकादिप्रक्रमेणारब्ध इति साधारणरूपानुवादः । मृत्पाषाणस्थावरलक्षण[4] इति । मृत्पाषाणस्थावरादिस्वभाव इत्यर्थः । तेषां मध्ये मृदं स्वरूपेण निर्धारयन्नाह । तत्रेति । तत्र भूप्रदेशाः स्थलनिम्नादयः प्राकारेष्टकादयः सर्वे ते मृत्प्रकारा मृत्प्रभेदा इत्यर्थः । पाषाणभेदमाह । पाषाणा इति । उपलाः शिलाः । मणयः सूर्यकान्तादयः । वज्रोऽशनिर्हीरश्च । तृणमुलपादिः । ओषधयः फलपाकान्ताः गोधूमादयः । ये सपुष्पफलास्ते वृक्षाः कोविदारप्रभृतयः । लता प्रसिद्धैव । अवतन्वन्तीत्यवतानाः नाम विटपाः केतकीबीजपूरादयः । ये विना पुष्पं फलन्ति ते वनस्पतय औदुम्बरादयः । ननु स्वेच्छाधीनचेष्टाविरहः स्थावरत्वं तत्तु मृत्पाषाणयोरप्यस्ति सत्यं[5] तयो रूपान्तरस्यापि सम्भवादनेन रूपेणाभिधानं न कृतम् ॥

**अप्त्वाभिसम्बन्धादापः । रूपरसस्पर्शद्रवत्वस्नेहसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वसंस्कारवत्यः[6] । पूर्ववदेषां सिद्धिः । शुक्लमधुर-**

---

(१) जलाद्यनभिभूते–पा॰ १ पु॰ । (२) विशिष्टोपादानादिदमेव–पा॰ १ पु॰ ।
(३) करणसंख्यत्वात्–पा॰ २ पु॰ । (४) स्थावरादिलक्षण–पा॰ २ । ४ पु॰ ।
(५) तथापि–इत्यधिकं २ । ४ पु॰ । (६) संस्कारवत्यश्च–पा॰ ५ पु॰ ।

शीता एव रूपरसस्पर्शाः। स्नेहोम्भस्येव सांसिद्धिकं च द्रवत्वम्। ताश्च(१) पूर्ववद् द्विविधाः। नित्यानित्यभावात्। तासां तु कार्यं त्रिविधं(२) शरीरेन्द्रियविषयसञ्ज्ञकम्(३)। तत्र शरीरमयोनिजमेव वरुणलोके पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम्। इन्द्रियं सर्वप्राणिनां रसव्यञ्जकं विजात्यनभिभूतै(४)र्जलावयवैरारब्धं रसनम्। विषयस्तु सरित्समुद्रहिमकरकादिः(५)॥

अपां लक्षणमाह। अप्त्वाभिसम्बन्धादापः। अत्रापि व्यवहारसाधनं समानासमानजातीयव्यवच्छेदो वा लक्षणार्थः पूर्ववत्। इदं त्विह वक्तव्यम्। स्वयं प्रत्यक्षाधिगतपदार्थभेदः परस्य लक्षणेन(६) प्रतिपादयेत् अप्रतिपन्नस्याप्रतिपादकत्वात्। भेदश्च पदार्थानामन्योन्याभावलक्षणः स च यस्याभावो यत्र चाभावस्तदुभयग्रहणेन गृह्यते अन्यथा तत्स्वरूपप्रतिनियमेन निषेधानुपपत्तिः गोरश्वो न भवतीति। तत्र किं सङ्कीर्णयोरुभयोर्ग्रहणादन्योन्याभावग्रहणं परस्परविविक्तयोर्वा सङ्कीर्णग्रहणे तावदयमयं न भवतीति प्रतीत्यसम्भव एव परस्परविविक्तयोर्ग्रहणादभावप्रतीतावितरेतराश्रयत्वं विविक्तयोर्ग्रहणे सत्यभावग्रहणमभावग्रहणे च विविक्तग्रहणं अभाव एव विवेको यतः। अत्रोच्यते। भिन्नयोरितरेतराभावो न त्वितरेतराभावो भेदः यदेतद्वस्तुनः प्रात्यात्मिकं स्वरूपं स एव भेदः तच्चापरदर्शनानपेक्षमिन्द्रियसन्निकर्षमात्रादेव प्रतीयमानं प्रत्येकं विलक्षणमेव संवेद्यते तथाहि गवार्थी नाश्वदर्शनात् प्रवर्तते गोशब्दं च न स्मरति तत्राश्वे गवि च स्वेन स्वेनात्मना गृह्यमाणेन तत्स्वरूपनियमेनान्योन्याभावप्रतीतिर्नानुपपन्ना। न चैवं सति वाच्यं स्वरूपभेद एवास्तु किमन्योन्याभावेनेति तस्यापि प्रतिषेधविषयस्य संवेदनात्। न केवलमप्त्वमपां वैधर्म्यं

(१) तास्तु-पा॰ ५ पु॰। (२) भेदात्। कार्यं पुनस्त्रिविधम्-पा॰ ६ पु॰।
(३) सञ्ज्ञम्-पा॰ १ पु॰।
(४) अन्यावयवानभिभूतै-पा॰ ५ पु॰। विजातीयावयवानभिभूतै-पा॰ ६ पु॰।
(५) करकादिरिति-पा॰ ५ पु॰। (६) लक्षणभेदेन-पा॰ १ पु॰।

स्नेहसहचरितं चतुर्दशगुणवत्त्वमपीतरेभ्यो वैधर्म्यमिति प्रतिपादयन्नाह । रूपरसेति । अत्र द्वन्द्वानन्तरं मतुप्प्रत्ययः करणीयः । पूर्ववदेषां सिद्धिः(१)। यथा पूर्वं पृथिव्यां सूत्रकारवचनादेषां रूपादीनां गुणानां सिद्धिः प्रतिपत्तिस्तथाप्स्वपीत्यर्थः। तथा च सूत्रं रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाश्चेति । संख्यादिप्रतिपादकं तु साधारणमेव सूत्रम् । वैधर्म्यनिरूपणावसरे पृथिव्यादिसाधारणानां रूपादीनामभिधानमयुक्तमित्याशङ्क्यावान्तरभेदेनैषामसाधारणत्वं प्रतिपादयति । शुक्लेत्यादि । शुक्लमेव रूपमपां मधुर एव रसः शीत एव स्पर्शः । अप्सु रूपान्तरप्रतीतिराश्रयरूपभेदात् कथमेतदिति चेत् तासामेवोद्धृत्य वियति विक्षिप्तानां धवलिममात्रप्रतीतेः पुनर्निपतितानामाश्रयरूपानुविधानात् । तासु न मधुरो रसो गुडादिवदप्रतिभासनादिति(२) चेन्न कटुकषायतिक्तलवणाम्लविलक्षणस्य रसस्य संवेदनात् गुडादिवदप्रतिभासनं(३) तु माधुर्यातिशयाभावात् । निर्विशेष एव स्नेहोऽपां वैधर्म्यमिति ध्वनति । स्नेहोम्भस्येवेति । नन्वयं पृथिव्यामपि वर्तते यथा क्षीरे तैले सर्पिषि च न सर्वत्र पाषाणेष्टकाशुष्केन्धनादिष्वसम्भवात् यत्तु क्वचित् क्षीरादिषु दर्शनं तत्संयुक्तसमवायादुदकगतस्यैव यथा सांसिद्धिकद्रवत्वस्य क्षीरतैलयोः उदकधर्मत्वं तु स्नेहस्य सर्वत्र तदन्वयव्यतिरेकानुविधानात् तथा चानूपदेशप्रभवानां तरुतृणादीनां स्निग्धता जाङ्गलप्रदेशप्रभवानां च रूक्षता तत्रापि सततं परिषिच्यमानमूलानां स्निग्धत्वं तद्विरहिणां च तन्नास्तीति । सांसिद्धिकं च द्रवत्वमिति । न केवलं स्नेहः स्वभावसिद्धं च द्रवत्वमम्भस्येवेत्यर्थः । क्षीरतैलयोस्त्वाश्रयसन्निकर्षेण(४) तदुपलम्भः क्वचित्तयोर्घनत्वोपलम्भात् । पृथिव्या इवापामप्यवान्तरभेदेन द्वैविध्यमित्याह । ताश्चेति । परमाणुस्वभावा आपो नित्याः । कार्यस्वभावास्त्वनित्याः । कार्यं च त्रिविधम् । अत्रापि पूर्ववदनुषङ्गः । यथा पृथिव्याः शरीरेन्द्रियविषयसंज्ञितं कार्यं त्रिविधमेवमपामपीति । तत्र शरीरमयोनिजमेव । पार्थिवं शरीरं योनिजमयोनिजं च आप्यं शरीरमयोनिजमेवेति विशेष इत्यर्थः । ननु मानुषं शरीरं तावत्पार्थिवं गन्धगुणोपलब्धेराप्यं तु क्वास्तीत्याह । वरुणलोके इति । इदं शरीरमपामागमात्प्रत्येतव्यम् । द्रव्यैकस्वभाव-

(१) पूर्ववत् सिद्धिः–पा॰ १ पु॰ । (२) प्रतिभासमानत्वादिति–पा॰ १ पु॰ ।
(३) प्रतिभासमानं–पा॰ १ पु॰ । (४) स्वाश्रयसंनिकर्षेण–पा॰ १ पु॰ ।

त्वादपां तदारब्धं शरीरं जलबुद्बुदप्रायं विशिष्टव्यवहारायोग्यं कथमुपभोगसमर्थं स्यादित्याह । पार्थिवावयवोपष्टम्भादुपभोगसमर्थम् । पार्थिवानामवयवानामुपष्टम्भात् संयोगविशेषादाप्यं शरीरमुपभोगाय समर्थं स्यात् आप्यशरीरोत्पत्तौ पार्थिवावयवा निमित्तकारणं तेषां संयोगादाप्यावयवानां द्रवत्वे प्रतिबद्धे विशिष्टमेवेदं शरीरमुत्पद्यते न जलबुद्बुदप्रायमित्यर्थः । ये तु पञ्चभूतसमवायिकारणं शरीरमित्यास्थिषत तेषामगन्धं शरीरं स्यात् कारणगन्धस्यैकस्यानारम्भकत्वात् चित्ररूपरसस्पर्शं च प्राप्नोति कारणेषु नानारूपरसस्पर्शसम्भवात् न चैवं दृष्टं तस्मान्न पञ्चभूतप्रकृतिकं भूजलप्रकृतिकमप्यत एव न स्यात् अत एव भूजलानिलप्रकृतिकमपि न स्यात् भूवाय्वाकाशप्रकृतिकत्वे ऽरूपमरसमगन्धं च स्यात् । अनलानिलाकाशप्रकृतिकत्वे चागन्धमरसं चेत्यादि यथासम्भवं योजनीयम् । न च पञ्चभूतसमवायिकारणत्वे शरीरस्यैकत्वं प्राप्नोति स्वभावभेदेन भेदोपपत्तेः । मानुषं शरीरं पृथिव्यात्मकं गन्धवत्त्वात् परमाणुलक्षणपृथिवीवत् उदकादिधर्मोपलम्भः कथमचेति चेत् संयुक्तसमवायादित्यलम् । इन्द्रियं रसव्यञ्जकं सर्वप्राणिनामिति । सर्वप्राणिनां रसव्यञ्जकं यदिन्द्रियं तज्जलावयवैरारब्धं तथापि कस्मात्तदेव रसव्यञ्जकं स्यात् नान्यदुदकद्रव्यमित्याह । विजात्यनभिभूतैरिति । विजातिभिः पार्थिवावयवैर्यै ऽनभिभूता अप्रतिहतसामर्थ्या आप्यावयवास्तैरितरद्रव्यविलक्षण[१]मारब्धमत इदं विशिष्टोत्पादाद्रसव्यञ्जकमिन्द्रियं न द्रव्यान्तरं तस्येत्थमुत्पत्त्यभावादित्यर्थः । एतच्च नियमदर्शनादेव कल्प्यते रसनेन्द्रियसद्भावे रसोपलब्धिरेव प्रमाणं क्रियायाः करणसाध्यत्वात् आप्यत्वं रूपादिषु मध्ये रसव्यञ्जकत्वात् मुखशोषिणां लालादिद्रव्यवत् । विषयनिरूपणार्थमाह । विषयस्त्विति । सरित्समुद्रो हिमं करको घनोपलमित्यादि[२]विषयो भोग्यत्वेन भोक्तुर्भोगसाधनत्वात् ॥

**तेजस्त्वाभिसम्बन्धात् तेजः । रूपस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसंस्कार-**

---

(१) इतरविलक्षण-पा॰ १ पु॰ । (२) इत्येवमादि-पा॰ ४ पु॰ ।

वत् । पूर्ववदेषां सिद्धिः । तत्र शुक्लं भास्वरं च रूपम्(१) । उष्ण एव स्पर्शः(२) । तदपि द्विविधमणुकार्यभावात् । कार्यं च शरीरादित्रयम्(३) । शरीरमयोनिजमेवादित्यलोके पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम् । इन्द्रियं सर्वप्राणिनां रूपव्यञ्जकमन्यावयवानभिभूतैस्तेजोवयवैरारब्धं चक्षुः । विषयसञ्ज्ञकं चतुर्विधम् । भौमं दिव्यमुदर्यं(४)माकरजं च । तत्र भौमं काष्ठेन्धनप्रभवमूर्ध्वज्वलनस्वभावं(५) पचनदहन(६)स्वेदनादिसमर्थं दिव्यमबिन्धनं सौरविद्युदादि भुक्तस्याहारस्य रसादिपरिणामार्थमुदर्यं(७) आकरजं च सुवर्णादि । तत्र संयुक्तसमवायाद्रसाद्युपलब्धिरिति ॥

तेजस्त्वाभिसम्बन्धात् तेज इति । व्याख्यानं पूर्ववत् । तेजस्त्वमिव रूपाद्येकादशगुणयोगोपि तस्य वैधर्म्यमिति दर्शयति । रूपेत्यादि । पूर्ववत् तेषां(८) सिद्धिरिति । यथा सूत्रकारवचनाद्रूपादीनां पृथिव्यां सिद्धिस्तथा तेजस्यपीत्यर्थः । तथा च सूत्रम् । तेजोपि रूपस्पर्शवत् । संख्यादिप्रतिपादकं तु साधारणमेव सूत्रम् । यादृशमस्य रूपं तद्दर्शयति । शुक्लं भास्वरं चेति । शुक्लं रूपं पृथिव्युदकयोरप्यस्ति किं तु न भास्वरं रूपं स्वरूपप्रकाशकं शुक्लं रूपं तेजस्येवेति वैधर्म्यम् । यत्त्वस्य लोहितं कपिलं वा रूपं क्वचित् प्रतीयते तदाश्रयोपाधिकृतम् निराश्रयस्य सर्वत्र शुक्लतामात्रप्रतीतेः यथा प्रदीपप्रभामण्डलस्य सौरचन्द्राद्यालोकस्य च । उष्ण एव स्पर्श इति । पृथिव्युदकमरुतामनुष्णाशीतशीतानुष्णाशीतस्पर्शाः । उष्ण एव तेजसः स्पर्श इति वैधर्म्यम् । पृथिव्युदकवत्तेजसोपि द्वैविध्यमपिशब्देन सम्भावयन्नाह । तदपीति । अणु-

---

(१) शुक्लं भास्वरं च रूपम्–पा॰ ५ पु॰ । (२) नैमित्तिकं द्रवत्वं चेत्यधिकम् ५ पु॰ ।
(३) शरीरेन्द्रियविषयसञ्ज्ञकमित्यधिकम्–५ पु॰ । (४) दिव्यमौदर्य–पा॰ १ पु॰ ।
(५) स्वभावकम्–पा॰ ६ पु॰ । (६) दहन–इति नास्ति ५ पु॰ ।
(७) रसादिभावेन परिणामसमर्थमुदर्यम्–पा॰ ५ पु॰ । (८) पूर्ववदेषां–पा॰ २ पु॰ ।

भावात् कार्यभावात् तेजोपि द्विविधमिति । कार्यं च शरीरादिचयम् । शरीर-मिन्द्रियं विषय इति चयं तेजस एव कार्यम् । शरीरमयोनिजमेवादित्यलोके । ननु दहनात्मत्वात्तैजसां तदारब्धं शरीरं वह्निपुञ्जप्रायं विशिष्टव्यवहारा-योग्यत्वान्नोपभोगाय कल्पते तचाह । पार्थिवावयवोपष्टम्भाच्चेति । पार्थिवाना-मवयवानां निमित्तभूतानामुपष्टम्भात् संयोगविशेषात् तेजोवयवा उपभोगक्षमं विशिष्टमेव शरीरमारभन्ते न वह्निपुञ्जप्रायमित्यभिप्रायः । इन्द्रियं रूपव्यञ्ज-कमिति । सर्वप्राणिनां रूपव्यञ्जकं यदिन्द्रियं तत् तेजोवयवैरारब्धम् । इद-मेव कुतो रूपव्यञ्जकमिन्द्रियं स्यात् नान्यत्तेजोद्रव्यमित्यत्रोपपत्तिः । अन्या-वयवानभिभूतैरिति । ये पार्थिवोदकावयवैरप्रतिबद्धसामर्थ्यास्तेजोवयवास्तैरा-रब्धं चक्षुः अत इदं विशिष्टोत्पादाद्रूपाभिव्यञ्जकमिन्द्रियं नान्यत् तादृशं तदु-त्पद्यते इत्यत्रादृष्टमेव कारणं कार्यनियम एव प्रमाणम् । तैजसत्वं तु तस्य रूपादिषु मध्ये नियमेन रूपस्याभिव्यञ्जकत्वात् प्रदीपवत् । इदं त्वदृष्टवशाद-नुद्भूतरूपस्पर्शम् । तेन न स्वाश्रयं दहति नाप्युपलभ्यते । विषयसञ्ज्ञकं चतु-र्विधम् । विषय इति सञ्ज्ञा यस्य तद्विषयसञ्ज्ञकं तेजःकार्यं चतुर्विधम् । चातुर्विध्यमेव दर्शयति । भौममित्यादि । तत्रेति निर्धारणार्थः । भूमौ भवं भौमं काष्ठेन्धनप्रभवं काष्ठस्वभावं यदिन्धनं तस्मात् प्रभवत्युत्पद्यते निराश्र-यस्यानुत्पत्तेः काष्ठग्रहणमुपलक्षणार्थं तृणतुषादीनामपि कारणत्वात् । ऊर्ध्व-ज्वलनं क्रियाविशेषस्तत्स्वभावकं तद्धर्मकं पचनस्वेदनादिसमर्थं पचनं पूर्वगु-णविलक्षणं गुणान्तरोत्पादनं स्वेदनं स्तब्धत्वनाशनं आदिशब्दाद्विस्फोटादि-जननलक्षणं दहनं तत्र समर्थमित्यर्थक्रियोपवर्णनम् । दिव्यमबिन्धनं सौरं विद्युदादिभवं तेजोऽबिन्धनं आप इन्धनं यस्येति व्युत्पत्त्या तत्सौरं विद्यु-दादि आदिशब्दादुल्काया अवबोधः । भुक्तस्याहारस्य रसादिपरिणामार्थ-मुदर्यं उदरे भवं तेजो भुक्तस्याहारस्य रसमलधातुभावेन परिणामप्रयोजनम् । आकरजं च सुवर्णादि । आकरः स्थानविशेषः तस्मिन् सुवर्णरजतादि तैजसं द्रव्यं जायते । सुवर्णादीनां तैजसत्वे तावदागमः प्रमाणम् । न्यायश्चाभिहितः । कथं तर्हि गन्धरसयोरनुष्णाशीतस्पर्शस्य च गुणस्योपलब्धिरत आह । तत्रेति । भोगिनामदृष्टवशेन भूयसां पार्थिवानां पार्थिवावयवानामुपष्टम्भाद-

नुद्भूतरूपस्पर्शं पिण्डीभावयोग्यं सुवर्णादिकमारभ्यते तत्र पार्थिवद्रव्यसमवेता इमे रसादयो गृह्यन्ते ॥ इतिशब्दः समाप्तौ(1)। अनुद्भूतरूपस्पर्शं सुवर्णादिकमिति न मृष्यामहे प्रतीयमानरूपस्पर्शव्यतिरिक्तस्य द्रव्यान्तरस्याभावादिति चेन्न स्तम्भोयं कुम्भोयमिति प्रत्येकविलक्षणसंस्थानसंवेदनात् रूपादिस्वभावस्य सर्वत्राविशेषात् । वासनाभेदात् प्रतिसङ्ख्यं संवित्तिभेद इति चेन्नीलादिसंवित्तिभेदोपि वासनाकृत एवास्तु नार्थो नीलादिभेदेन । असति बाह्यवस्तुनि स्वसन्तानमात्राधीनजन्मनो वासनापरिपाकस्य कादाचित्कत्वानुपपत्तेस्तन्मात्रहेतोर्नीलादिसंवेदनस्य कादाचित्कत्वासम्भवान्नीलादिभेदकल्पनेति चेत् स्तम्भादिसंवित्तिभेदस्यापि बाह्यवस्त्वननुरोधिनो न कादाचित्कत्वमुपपद्यते इति रूपादिव्यतिरिक्तः प्रतिसङ्ख्यं वासनाविशेषप्रबोधहेतुर्विलक्षणः संस्थानविशेषः कल्पनीयः। येन दर्शनस्पर्शनाभ्यामेकार्थग्रहणमपि सिद्ध्यति रूपादिमात्रे वस्तुन्यस्याप्यसम्भवः तेषामेकैकेन्द्रियग्रहणनियमात् । अपि च रूपादयः परमाणुस्वभावाः प्रत्येकमतीन्द्रियास्तद्व्यतिरिक्तः सङ्घो नास्तीति भवतां कोर्थो दर्शनस्पर्शनविषयः प्रत्येकमतीन्द्रिया अपि परमाणवो मनस्कारेन्द्रियादिषु(2) सत्सु समर्थोत्पन्ना ऐन्द्रियका भवन्तीति चेन्न समर्थोत्पादेपि परमसूक्ष्मस्वरूपानतिवृत्तेः समर्थोत्पत्तिमात्रेण च चाक्षुषत्वे मनस्कारेन्द्रिययोरपि प्रत्यक्षता स्यादविशेषात् । अथ मतं प्रत्येकमस्थूला अपि परमाणवः केशसमूहवत्संहताः स्थूलावभासभाजो भवन्तश्चाक्षुषा जायन्ते निरन्तरतया चैकत्वेनाध्यवसीयन्ते इति चेत् किमेतेषु बहुषु तदानीमेकः स्थूलाकारो जायते किं वा केशेष्विवाविद्यमानः समारोप्य प्रतीयते यदि च जायते स नोवयवीति अथाविद्यमानः प्रतीयते भ्रान्तिस्तर्हि भ्रान्तिश्चाभ्रान्तिप्रतियोगिनी क्वचिदेकः स्थूलः सत्योभ्युपेयः न च विज्ञाने तस्य सत्यता युक्ता स्थूलमहमस्मीति प्रतीत्यनुदयादनेकद्रष्टृसाधारणत्वाभावप्रसङ्गाच्च तस्माद्विषय एवायमेकः स्थूलः सर्वदाभिन्नाकारेण प्रतिभासनादर्थक्रियासम्पादनाच्चेत्यवयविसिद्धिः। नन्वसति बाधके प्रतीतिसिद्धस्तथेति व्यवह्रियते अवयविसद्भावे तु बाधकं प्रमाणमस्ति तथाहि पाणौ कम्पमाने तदाश्रितं शरीरं न कम्पते पादे वा कम्पमाने तद्गतं शरीरं न कम्पते इत्येकस्य विरुद्धधर्मताप्रसङ्गः। तदसङ्गतम् । पाणौ कम्पमाने शरीरकम्पावश्य-

(१) परिसमाप्तौ—पा॰ २। ४ पु॰। (२) मनसः कारो व्यापारभेदः।

ऽभावनियमाभावात् यदा पाणिमात्रं चालयितुं कारणं भवति तदा तन्मात्रं चलति न शरीरं कारणाभावात् यदा तु शरीरस्यापि चलनकारणं भवेत् तदा शरीरं चलत्येव नास्याचलनमस्तीति कुतो विरोधः यदि हस्तश्चलति न शरीरं तदावयवावयविनोर्युतसिद्धिः। नैवम् पृथगाश्रयाश्रयित्वं युतसिद्धिः न चलाचलत्वं द्रव्ये चलति गुणस्याचलनेपि तयोर्युतसिद्ध्यभावात् पृथगाश्रयाश्रयित्वं चावयवावयविनोर्भिन्नत्वेपि नास्तीति न युतसिद्धता यदप्यन्यद्बाधकमुक्तम् एकावयवावरणे तत्समवेतस्यावयविनो न ग्रहणम् अनावृतावयवग्रहणे च ग्रहणमित्येकस्य युगपद्ग्रहणमग्रहणं च प्राप्नुत इति। तदप्यसारम्। एकावयवावरणे ऽवयव्यावरणस्याभावात् स ह्येकोनेकेषु वावयवेषु([१]) वर्तमानः कतिपयावयवावरणेप्यनावृतेतरकतिपयावयवग्रहणेन गृह्यते तस्य सर्वत्राभिन्नत्वात्। यत्तु बहुतरावयवग्रहणवत् स्थूलप्रतीतिर्न भवति तद्भूयोवयवप्रचयग्रहणस्य परिमाणप्रकर्षप्रतीतिहेतोरभावात्। यत्र तु भूयसामवयवानामावरणमल्पतरावयवग्रहणं च तत्रावयविनो न ग्रहणम्। यथा जलनिमग्नस्य शिरोमात्रदर्शनात् एकस्मिन्नवयवे रक्ते तद्द्वेशे([२])ऽवयवी रक्तोऽवयवान्तरे चारक्त इत्येकस्य रक्तारक्तत्वप्रसङ्ग इत्यदूषणमविरोधात् रागद्रव्यसंयोगो रक्तत्वं अरक्तत्वं च तदभावः उभयं चैकत्र भवत्येव संयोगस्याव्याप्यवृत्तिभावात्। इदमपरं बाधकम्। अवयविनः प्रत्यवयवमेकदेशेन वृत्तिः कार्त्स्न्येन वा प्रकारान्तराभावात् न तावदेकदेशेन वृत्तिरवयवव्यतिरेकेणास्यैकदेशाभावात्। कार्त्स्न्येन वृत्तौ वावयवान्तरे वृत्त्यभावः एकावयवसंसर्गावच्छिन्ने स्वरूपे ऽवयवान्तराणामनवकाशात् तत्स्वरूपव्यतिरेकेण चास्य स्वरूपान्तराभावात् अत्रापि निरूप्यते। यद्वर्तते तदेकदेशेन वर्तते([३]) कार्त्स्न्येन वेति किमिदं स्वसिद्धमभिधीयते परसिद्धं वा स्वयं तावत् कस्यचित्क्वचिद्वृत्तिरसिद्धा शाक्यानां परस्यापि नैकदेशकार्त्स्न्याभ्यां वृत्तिः सिद्धा तयोरवृत्तित्वात् वृत्तिं प्रत्यकारणत्वाच्च। यद्वर्तते तत्स्वरूपेणाश्रयाश्रित([४])भावलक्षणया वृत्त्या वर्तते न चैकस्यानेकसंसर्गो विरुद्ध्यते दृष्टो हि चित्रज्ञाने नीलाकारावच्छिन्ने पीताद्याकारसंसर्गः न च तस्य प्रत्याकारं भेदः एकस्यानेकाकारग्रहणानुपपत्तौ भवतां चित्रप्रत्ययाभावप्रसङ्गात्

---

(१) अनेकेष्वेवावयवेषु—पा १ पु०। (२) तद्देशे—इत्यनुमीयते।
(३) वा वर्तते—पा० २।४ पु०। (४) आश्रयाश्रयि—पा० २ पु०।

नापि ज्ञानैकत्वादाकाराणामप्येकत्वं चित्रानुभवविरोधात् यथैकावयवावच्छिन्ने एकावयविस्वभावे ऽवयवान्तरसमावेशः प्रत्यक्षेणानेकावयवसम्बद्धस्य तथैकस्य स्थूलात्मनः संवेदनाद्वैकस्मिन्ननेकसंसर्गो दृष्टो नैकस्यानेकेषु संसर्ग इति च वैधर्म्यमात्रं एकस्यानेकसंसर्गावच्छेदस्योभयत्राविशेषात् । एवं यदेकं तदेकत्रैव वर्तते यथैकं रूपमेकश्चावयवीति तथा यदनेकवृत्ति तदनेकं यथानेकभाजनगततालफलान्यनेकवृत्तिश्चावयवीति प्रसङ्गद्वयं प्रत्याख्यातम् । स्वतः परतश्च व्याप्यसिद्धेः स्वतस्तावदेकं विज्ञानमनेकेषु विषयेन्द्रियमनस्कारेषु स्वरूपाभेदेन तदुत्पत्त्या वर्तते परस्याप्येकं सूत्रमभेदेनानेकेषु मणिषु संयोगवृत्त्या वर्तते तथावयव्यवयवेषु समवायवृत्त्या वर्तिष्यते नाना च न भविष्यति सर्वश्चायं प्रसङ्गहेतुराश्रयं निघ्नन्नात्मानमपि हन्ति । अवयव्यभावे परमाणुमात्रे जगति धर्मधर्मिदृष्टान्तादिप्रतीत्यसिद्धौ निराश्रयस्य वृत्त्यभावात् अतो नानेन प्रत्यक्षसिद्धोऽवयवी शक्यो निराकर्तुम् प्रत्यक्षसापेक्षस्य तस्य ततो दुर्बलत्वात् भ्रान्तं प्रत्यक्षमिति चेत् कुत एतत् बाधकेनापाकरणादिति चेत् प्रत्यक्षस्य भ्रान्तत्वे बाधकस्य प्रमाणत्वं बाधकप्रामाण्ये च प्रत्यक्षस्य भ्रान्तत्वमित्यन्योन्यापेक्षित्वं प्रत्यक्षे तु नायं न्यायस्तस्यानपेक्षत्वात् न चार्थक्रियासंवादिसर्वलोकसिद्धं स्पष्टप्रतिभासं भ्रान्तमिति युक्तं नीलादिप्रत्यक्षस्यापि भ्रान्तत्वप्रसङ्गादिति बाधकोद्धारः । परमाणवोऽवयव्यनुमेया अपि सन्तो व्यवहर्तव्याः षट्केन युगपद्योग एकस्य परमाणोः षडंशत्वमापादयन् परमाणुसद्भावं बाधते इति चेत् कोऽयं युगपद्योगो नाम किमेकस्य परमाणोः षड्भिः परमाणुभिः सह युगपदुत्पादः किं वा युगपत्संयोगः युगपदुत्पादस्तावत् कारणयौगपद्यादेव निरंशस्यापि यदि भवेत् को विरोधः अथ युगपत्संयोगः सोपि नानुपपन्नः न ह्यंशविषयः संयोगो द्रव्याणां निरंशस्याप्याकाशस्य तद्भावात् अंशस्याप्यंशान्तरसद्भावे(१) परमाणुमात्रे संयोगस्थितौ तस्याप्रत्यक्षत्वप्रसङ्गाच्च किं तु स्वरूपविषय एवं चेत् सांशद्रव्यस्येव निरंशस्यापि परमाणोरेकस्य युगपत्कारणसम्भवे सत्यनेकसंयोगाधिकरणत्वमुपपद्यत एवेति न तत्प्रतिक्षेपः ॥

---

(१) सम्भवे-पा॰ २।४ पु॰ ।

वायुत्वाभिसम्बन्धाद्वायुः। स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारवान्(१)। स्पर्शोऽस्यानुष्णाशीतत्वे सत्यपाकजः। गुणविनिवेशात् सिद्धः(२)। अरूपिष्वचाक्षुषवचनात् सप्त संख्यादयः। तृणकर्मवचनात् संस्कारः। स चायं द्विविधोऽणुकार्यभावात्। तत्र कार्यलक्षणश्चतुर्विधः शरीरमिन्द्रियं विषयः प्राण इति। तत्रायोनिजमेव शरीरं मरुतां लोके पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम्। इन्द्रियं सर्वप्राणिनां स्पर्शोपलम्भकं पृथिव्याद्यनभिभूतैर्वाय्ववयवैरारब्धं सर्वशरीरव्यापि त्वगिन्द्रियम्। विषयस्तूपलभ्यमानस्पर्शाधिष्ठानभूतः स्पर्शशब्दधृतिकम्पलिङ्गस्तिर्यग्गमनस्वभावो मेघादिप्रेरणधारणादिसमर्थः। तस्याप्रत्यक्षस्यापि नानात्वं सम्मूर्च्छनेनानुमीयते। सम्मूर्च्छनं पुनः समानजवयोर्वाय्वोर्विरुद्धदिक्क्रिययोः सन्निपातः सोऽपि सावयविनोर्वाय्वोरूर्ध्वगमनेनानुमीयते तदपि तृणादिगमनेनेति(३)। प्राणोऽन्तःशरीरे रसमलधातूनां प्रेरणादिहेतुरेकः सन्(४) क्रियाभेदादपानादिसञ्ज्ञां लभते(५)॥

प्रत्यक्षं पृथिव्यादित्रयं व्याख्यायाप्रत्यक्षद्रव्यव्याख्यानावसरे नित्यानित्योभयस्वभावद्रव्यनिरूपणस्य प्रकृतत्वाद्वायुं व्याचष्टे। वायुत्वाभिसम्बन्धाद्वायुरिति। व्याख्यानं पूर्ववत्। तस्य गुणान् कथयति। स्पर्शेत्यादि। अत्रापि पूर्ववद्व्याख्या। यादृशः स्पर्शो वायौ वर्तते तं दर्शयति। स्पर्श इति। पृथि-

(१) वेगवान्–पा॰ ६ पु॰।
(२) गुणविनिवेशाधिकारे तत्सिद्धेः–पा॰ ६ पु॰। गुणविनिवेशात् सिद्धिः–पा॰ १ पु॰।
(३) तृणादीनामूर्ध्वगमनेनानुमीयते–पा॰ ६ पु॰। (४) एकस्मिन्–पा॰ २ पु॰।
(५) लभत इति–पा॰ ५ पु॰।

वोस्पर्शः पाकजः परमाणुषु तत्पूर्वकश्च स्वकार्येषु । अस्य तु स्पर्शोऽपाकज इत्यतो वैधर्म्यम् । अपाकजत्वं चास्य पृथिव्यनधिकरणत्वादुदकतेजःस्पर्शवत् । अनुष्णाशीतत्वे सतीत्युदकतेजःस्पर्शाभ्यां वैधर्म्यमुक्तम् । अयं च द्वितीयाध्यायाद्वायुः स्पर्शवानिति सूत्रेण वायोः सिद्ध इत्याह । गुणविनिवेशा(१)-दिति । अरूपिष्वचाक्षुषवचनात् सप्त संख्यादयः । रूपरहितेषु द्रव्येषु संख्यादयश्चाक्षुषा न भवन्तीत्यभिधानादरूपिषु संख्यादीनां सद्भावः कथितः अन्यथा तद्वर्तिनां तेषामप्रत्यक्षत्वाभिधानमसम्बद्धं स्यात् । तृणकर्मवचनात् संस्कार इति । तृणकर्म वायोः संयोगादिति वचनाद्वायो संस्कारो दर्शितः । वेगरहितद्रव्यसंयोगस्य कर्महेतुत्वानुपलम्भात् । तस्य भेदनिरूपणार्थमाह । स चायमिति । स चेति स्मृत्युत्थापितो बुद्धिसन्निहितः पश्चादयमिति प्रत्यक्षवत् परामृश्यते । न केवलं पृथिव्यादयो द्विविधा अयमपि द्विविध इति चार्थः । कार्यलक्षणश्चतुर्विधः । कार्यस्वभाव इत्यर्थः । चातुर्विध्यं कथमित्यत आह । शरीरमिन्द्रियं विषयः प्राण इति । तेषां मध्ये शरीरं जात्या निर्धारयति । तत्र शरीरमिति । अयोनिजमेव न तु पार्थिवशरीरवद्योनिजमयोनिजमपीत्यर्थः । मरुतां लोक इति स्थानसङ्कीर्तनम् । भूयसां पार्थिवावयवानां निमित्तकारणभूतानामुपष्टम्भात् संयोगविशेषात् स्थिरं संहतस्वभावमुत्पन्नं पार्थिवशरीरवदुपभोगसमर्थम् । इन्द्रियं सर्वप्राणिनां स्पर्शोपलम्भकमिति । यत्सर्वप्राणिनां स्पर्शोपलम्भकमिन्द्रियं तत्पृथिव्याद्यनभिभूतैरप्रतिहतसामर्थ्यैर्वाय्ववयवैरारब्धम् अतो विशिष्टोत्पादादिन्द्रियं स्यादित्यर्थः । तस्य सद्भावे तावत् स्पर्शोपलब्धिरेव प्रमाणम् । वायवीयत्वं चास्य रूपादिषु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वात् अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकसमीरणवत् । तच्च सर्वशरीरव्यापि । सर्वत्र तत्कार्यस्य स्पर्शोपलम्भस्य भावात् (२) । त्वगिन्द्रियमिति समाख्या त्वचि स्थितमिन्द्रियं त्वगिन्द्रियमित्युच्यते तत्स्थे तदुपचारात् । त्वचा सर्वेन्द्रियाधिष्ठानानि व्याप्तानि सत्यां त्वचि रूपादिग्रहणमसत्यामग्रहणमिति त्वगिन्द्रियं सर्वार्थं न तु स्पर्शमात्रग्राहकमिति केचित् । तदयुक्तम् । अन्धाद्यभावप्रसङ्गात् तत्तदधिष्ठानभेदेन शक्तिभेदाभ्युपगमे प्रकारान्तरेणेन्द्रियभेदाभ्युपगमः । विषयव्यवस्था नियमनिरूपणार्थमाह । विषयस्त्वति । उपलभ्यमानस्पर्शस्याधिष्ठानभूत आश्रयो यः स विषय

(१) गुणविनिवेशनात्-पा० १ पु० । (२) स्पर्शोपलम्भात्-पा० २ पु० ।

इति। किमस्यास्तित्वे प्रमाणं प्रत्यक्षमेव त्वगिन्द्रियव्यापारेण वायुर्वातीत्यपरोक्षज्ञानोत्पत्तेरिति कश्चित्। तन्न युक्तम्। स्पर्शव्यतिरिक्तस्य वस्त्वन्तरस्यासंवेदनात् अपरोक्षज्ञाने तु स्पर्श एव प्रतिभाति नान्यत् यदपि वायुर्वातीति ज्ञानं तदभ्यासपाटवातिशयाद्व्याप्तिस्मरणाद्यनपेक्षं स्पर्शेनानुमानं चक्षुषेव वृक्षादिगतक्रियोपलम्भात् शीतोष्णस्पर्शभेदप्रतीतौ वायुप्रत्यभिज्ञानमपि तदाश्रयोपनायकद्रव्यानुमानादेव त्वगिन्द्रियेण तु शीतोष्णस्पर्शाभ्यामन्यस्य न प्रतिभासोऽस्ति। स्पर्शनप्रत्यक्षो वायुरुपलभ्यमानस्पर्शाधिष्ठानत्वाद् घटवदित्यनुमानं शशादिषु पशुत्वेन शृङ्गानुमानवत् अनुपलब्धिबाधितं द्रव्यस्य स्पार्शनत्वं चाक्षुषत्वेन व्याप्तमवगतं घटादिषु चाक्षुषत्वस्य च वायावभावस्तेनाच शक्यं स्पार्शनत्वनिवृत्त्यनुमानमेतत् अतस्तस्याप्रत्यक्षस्य सद्भावे ऽनुमानमुपन्यस्यति। स्पर्शशब्दधृतिकम्पलिङ्ग इति। स्पर्शश्च शब्दश्च धृतिश्च कम्पश्चेति ते लिङ्गानि यस्येति बहुव्रीहिः। योयं रूपादिरहितः स्पर्शः प्रतीयते स क्वचिदाश्रितः स्पर्शत्वादितरस्पर्शवत् न चास्य पृथिव्येवाश्रयो रूप.वप्रयोगात् अस्त्यचाप्यनुद्भूतं रूपमिति चेन्न उपलभ्यमानस्य पार्थिवस्य स्पर्शस्योपलभ्यमानरूपेणैव सहाव्यभिचारोपलम्भात् न चेह रूपस्यास्त्युपलम्भस्तस्मान्नायं पार्थिवः स्पर्शः। न चोदकतेजसोरयमाश्रितोनुष्णाशीतत्वाद् घटादिस्पर्शवत् नाप्यमूर्तेष्वाकाशकालदिगात्मसु वर्तते स्पर्शस्य मूर्ताव्यभिचारोपलम्भात् मनसां च स्पर्शवत्त्वे परमाणूनामिव तेषां सजातीयद्रव्यारम्भकत्वं स्यान्न चैवं तस्मात्तेषामपि न भवति अतो यत्रायमाश्रितः स वायुरिति परिशेषः। एवं शब्दोप्यस्य लिङ्गं योयं पर्णादिष्वकस्माच्छुकशुकाशब्दः श्रूयते तस्याद्यः शब्दः स्पर्शवद्द्रव्यसंयोगजः अविभज्यमानावयवद्रव्यसम्बन्धित्वे सत्यादिशब्दत्वात् दण्डाहतभेरीशब्दवत् यश्चासौ स्पर्शवान् स वायुः। आकाशादीनां स्पर्शाभावात् पृथिव्युदकतेजसां च रूपवतां तच्छब्दहेतुत्वे प्रत्यक्षत्वप्रसङ्गात्। विभागजशब्दव्यवच्छेदार्थमविभज्यमानावयवद्रव्यसम्बन्धित्वे सतीत्युक्तम्। एवमन्तरिक्षे पर्णादीनां वृत्तिरवस्थितिः स्पर्शवद्द्रव्यसंयोगकार्या प्रयत्नवेगादिक.रणाभावे सति वृत्तित्वाज्जलोपरि स्थितपर्णादिवत् यच्च तत्स्पर्शवद्द्रव्यं न तत्पृथिव्यादित्रयमप्रत्यक्षत्वादेवेति द्रव्यान्तरसिद्धिः। इषोः पक्षिणां च स्थितिव्यवच्छेदार्थं प्रयत्नादिकारणाभावः। तथा वृक्षादीनां कम्पविशेषः स्पर्शवद्द्रव्यसंयोगजो

विशिष्टकम्पत्वात् नदीपूराहतवेतसादिवनकम्पवत् भूकम्पेन व्यभिचार इति चेन्न तस्यान्यहेतुत्वावगमात् स्पर्शवद्द्रव्यसंयोगजे तु विशिष्टकम्पत्वमेव प्रमाणमित्यव्यभिचारः । ननु यदेव द्रव्यं स्पर्शेनानुमितं तदेव शब्दादिभिरप्यनुमीयते न तु प्रतिलिङ्गं द्रव्यान्तरानुमितिः किमिह प्रमाणं येनैतदुच्यते स्पर्शशब्दधृतिकम्पलिङ्गो वायुरिति । इदं प्रमाणं स्पर्शानुमितद्रव्यकार्यत्वेनैव शब्दादीनामुपपत्तौ सम्भवन्त्यां द्रव्यान्तरकल्पनावैयर्थ्यमिति । एवं स्थिते वायौ तद्धर्मं दर्शयति । तिर्यग्गमनस्वभाव इति । तिर्यग्गमनं स्वभावो यस्येति । मेघादिप्रेरणे(१) इतस्ततो नयने धारणे गुरुत्वप्रतिबन्धे आदिशब्दाद्वर्षणे समर्थः । मेघादीत्यादिपदेन यानपात्रादि(२) परिग्रहस्तेषामपि वायुना प्रेर्यमाणत्वात् । अनुमीयमानेष्वाकाशादिष्वेकानेकत्वोपलब्धौ संशये सति तद्व्युदासार्थमाह । तस्याप्रत्यक्षस्यापीति । सम्मूर्च्छनमपि न ज्ञायते तदर्थमाह । सम्मूर्च्छनमिति । विरुद्धायां दिशि क्रिया ययोस्तयोः सन्निपातः परस्परगतिप्रतिबन्धहेतुः संयोगविशेषः सम्मूर्च्छनं तेन वायोर्नानात्वमनुमीयते एकस्य संयोगाभावात् एकदिक्प्रस्थितयोर्यथाक्रमं गच्छतोः सम्मूर्च्छनाभाव इति विरुद्धदिक्क्रिययोर्भिन्नदिक्क्रिययोरित्यर्थः । असमानवेगयोः सम्मूर्च्छनं न भवत्येकेनापरस्य विजयात् तदर्थं समानजवयोरिति । अप्रत्यक्षयोर्यथा नानात्वमप्रत्यक्षं तथा संयोगोपीति मत्वेदमाह । सोपीति । सोपि सन्निपातोपि । सावयविनोर्वाय्वोरूर्ध्वगमनेनानुमीयते वाय्वोरूर्ध्वगमनं परस्परव्याहतिपूर्वकं अन्यकारणासम्भवे सति तिर्यग्गतिस्वभावद्रव्योर्ध्वगतित्वात् परस्पराहतजलतरङ्गोर्ध्वगमनवत् । अवयविनोरिति वक्तव्ये सावयविनोरित्युक्तम् अवयवानामपि अवयवित्वविवक्षया स्थूलवायुपरिग्रहार्थम् । अणुपरिमाणस्य तृणादिप्रेरणसामर्थ्याभावात् ऊर्ध्वगमनमपि तयोरप्रत्यक्षमिति तत्प्रतिपत्तावनुमानमाह । तृणादिगमनेनानुमीयते इति । लोके योगशास्त्रे च विषयवायोर्भेदेन प्रसिद्धस्य प्राणाख्यस्य स्वरूपमाह । प्राणोन्तःशरीर इति । अन्तःशरीरे यो वायुर्वर्तते स प्राण इत्युच्यते । तस्यार्थक्रियां कथयति । रसमलधातूनां प्रेरणादिहेतुरिति । रस इति भुक्तवतामाहारेषु पाकजोत्पत्तिक्रमेणोत्पन्नस्य द्रव्यविशेषस्य ग्रहणम् । मल इति मूत्रपुरीषयोरभिधानम् । धातवस्त्वङ्मांसा-

(१) मेघादीनां प्रेरणे-पा॰ २ । ४ पु॰ । (२) पोतः ।

स्थिशोणितादयः तेषां प्रेरणस्येतस्ततोनयनस्य आदिशब्दाद् व्यूहनस्य च हेतुः। तस्यैकत्वानेकत्वसंशये सत्याह। एकः सन्निति(१)। ननु पञ्च वायवः शारीराः श्रूयन्ते तत्राह। क्रियाभेदादिति। मूत्रपुरीषयोरधो नयनादपानः रसस्य गर्भनाडीवितननाद्व्यानः अन्नपानादेरूर्ध्वं नयनादुदानः मुखनासिकाभ्यां निष्क्रमणात्प्राणः आहारेषु पाकार्थमुदर्यस्य वह्नेः समं सर्वत्र नयनात् समान इति न वास्तवमेतेषां(२) पञ्चत्वमपि तु कल्पितं कथमेकस्मिन्नाश्रये मूर्तानां समावेशाभावात्॥

इहेदानीं चतुर्णां महाभूतानां सृष्टिसंहारविधिरुच्यते। ब्राह्मेण मानेन वर्षशतान्ते(३) वर्तमानस्य ब्रह्मणोऽपवर्गकाले संसारखिन्नानां(४) सर्वप्राणिनां निशि विश्रामार्थं सकलभुवनपतेर्महेश्वरस्य संजिहीर्षासमकालं शरीरेन्द्रियमहाभूतोपनिबन्धकानां सर्वात्मगतानामदृष्टानां वृत्तिनिरोधे सति महेश्वरेच्छात्माणुसंयोगजकर्मभ्यः शरीरेन्द्रियकारणाणुविभागेभ्यस्तत्संयोगनिवृत्तौ तेषामापरमाणवन्तो विनाशः तथा पृथिव्युदकज्वलनपवनानामपि महाभूतानामनेनैव क्रमेणोत्तरस्मिन्नुत्तरस्मिन्(५) सति पूर्वस्य पूर्वस्य(६) विनाशः ततः प्रविभक्ताः परमाणवोऽवतिष्ठन्ते धर्माधर्मसंस्कारानुविद्धा आत्मान(७)स्तावन्तमेव कालम्। ततः पुनः प्राणिनां भोगभूतये महेश्वरसिसृक्षानन्तरं(८) सर्वात्मगतवृत्तिलब्धादृष्टापेक्षेभ्यस्तत्संयोगेभ्यः पवनपरमाणुषु कर्मोत्पत्तौ तेषां परस्परसंयोगेभ्यो द्व्यणुकादिप्रक्रमेण महान् वायुः समुत्पन्नो न-

---

(१) एकस्मिंश्चिति-पा॰ २।४ पु॰।
(२) एषां-पा॰ २।४ पु॰।
(३) वर्षशतस्यान्ते-पा॰ ५ पु॰।
(४) संसारे खिन्नानां-पा॰ ५ पु॰।
(५) उत्तरस्मिंश्च-पा॰ ५ पु॰।
(६) पूर्वपूर्वस्य-पा॰ ५ पु॰।
(७) आत्मानश्च-पा॰ ५ पु॰।
(८) महेश्वरस्य सिसृक्षानन्तरं-पा॰ ५ पु॰।

भसि दोधूयमानस्तिष्ठति । तदनन्तरं तस्मिन्नेव वायावाप्येभ्यः परमाणुभ्यस्तेनैव क्रमेण महान् सलिलनिधिरुत्पन्नः पोप्लूयमानस्तिष्ठति तदनन्तरं तस्मिन्नेव(१) पार्थिवेभ्यः परमाणुभ्यो(२) महापृथिवी(३) संहतावतिष्ठते। तदनन्तरं तस्मिन्नेव महोदधौ तैजसेभ्योऽणुभ्यो द्व्यणुकादिप्रक्रमेणोत्पन्नो महांस्तेजोराशिः केनचिदनभिभूतत्वाद्देदीप्यमान(४)स्तिष्ठति । एवं समुत्पन्नेषु चतुर्षु महाभूतेषु महेश्वरस्याभिध्यानमात्रात् तैजसेभ्योऽणुभ्यः(५) पार्थिवपरमाणुसहितेभ्यो(६) महदण्डमारभ्यते(७) तस्मिंश्चतुर्वदनकमलं सर्वलोकपितामहं ब्रह्माणं सकलभुवनसहितमुत्पाद्य प्रजासर्गे विनियुङ्क्ते । स च महेश्वरेण विनियुक्तो ब्रह्मातिशयज्ञानवैराग्यैश्वर्यसम्पन्नः प्राणिनां कर्मविपाकं विदित्वा कर्मानुरूपज्ञानभोगायुषः(८) सुतान् प्रजापतीन् मानसान् मनुदेवर्षिपितृगणान् मुखबाहूरुपादतश्चतुरो वर्णानन्यानि चोच्चावचानि भूतानि च सृष्ट्वाशयानुरूपैर्धर्मज्ञानवैराग्यैश्वर्यैः संयोजयतीति ॥

> उत्पत्तिमन्ति चत्वारि द्रव्याण्याख्याय विस्तरात् ।
> तेषां कर्तृपरीक्षार्थमुद्यमः क्रियतेऽधुना ॥

---

(१) तस्मिन्नेव जलनिधौ–पा॰ ५ पु॰ ।
(२) द्व्यणुकादिप्रक्रमेणोत्पन्ना–इत्यध्याहार्यम् ।
(३) समुत्पन्ना इत्यधिकं ५ पु॰ ।
(४) तेजोराशिर्देदीप्यमानः–पा॰ ५ पु॰ ।
(५) तैजसाणुभ्यः–पा॰ १ पु॰ ।
(६) पार्थिवादिपरमाणुसहितेभ्यो–पा॰ १ पु॰ ।
(७) महदण्डमुत्पद्यते–पा॰ ५ पु॰ ।
(८) ज्ञानवैराग्यभोगायुषः–पा॰ ६ पु॰ ।

पृथिव्यादीनां चतुर्णामुत्पत्तिविनाशौ निरूपणीयौ तयोश्च प्रतिप्रकरणं निरूपणे ग्रन्थविस्तरः स्यादिति समानन्यायेनैकत्र निरूपणार्थं प्रकरणमारभ्यते । चतुर्णामिति । सृष्टिसंहारयोरुत्पत्तिविनाशयोर्विधिः प्रकारः कथ्यते यद्यप्येकत्र चतुर्णामपि सृष्टिसंहारौ कथ्येते तथापि नेदं साधर्म्याभिधानं प्रत्येकं विलक्षणयोरेतयोरुपवर्णनात् । महाभूतानामित्युक्ते त्रयाणामेव परिग्रहः कपिञ्जलानालभेतेतिवत् बहुत्वसङ्ख्यायास्तावत्येव चरितार्थत्वात् अतश्चतुर्णामित्युक्तम् । चतुर्णामित्युक्ते चानन्तरोक्तमेव वायुकार्यं शरीरमिन्द्रियं विषयः प्राण इति चतुष्टयं बुद्धौ निविशते तन्निवृत्त्यर्थं महाभूतानामिति । नन्वेवं तर्हि द्व्यणुकानामुत्पत्तिविनाशौ न प्रतिज्ञातौ स्यातां तेषामणुत्वात् नैवम् विधिशब्दोपादानात् येन प्रकारेण महाभूतानामुत्पत्तिविनाशौ स प्रकारः कथ्यते इत्युक्तम् । तेषां च द्व्यणुकादिप्रक्रमेणोत्पत्तिरापरमाणवन्तश्च विनाश इति अतो द्व्यणुकानामपि सृष्टिसंहारौ प्रतिज्ञातौ स्याताम् । अर्थप्रतिपादनमात्रस्य विवक्षितत्वात् पश्चादुक्तमपि संहारं प्रथमं कथयति । ब्राह्मेण मानेनेति । अस्माकं पञ्चदश निमेषाः काष्ठा(१) त्रिंशतिः काष्ठाः कला पञ्चदश कला नाडिका त्रिंशत्कलो मुहूर्तः त्रिंशता मुहूर्तैरहोरात्रः पञ्चदशाहोरात्राः पक्षः द्वौ पक्षौ मासः द्वौ मासावृतुः षड्तवो द्वादश मासाः संवत्सरः ऋतुत्रयेणोत्तरायणम् ऋतुत्रयेण च दक्षिणायनम् उत्तरायणं च देवानां दिनं दक्षिणायनं च देवानां रात्रिः तथाभूताहोरात्रशतत्रयेण षष्ठ्यधिकेन वर्षं द्वादशसहस्रैश्च वर्षैश्चतुर्युगम् । चतुर्युगसहस्रेण ब्रह्मणो दिनमेकमित्यनेन मानेन वर्षशतस्यान्ते ऽव-

---

(१) क्षणद्वयं लवः प्रोक्तो निमेषस्तु लवद्वयम् ।
पञ्चदशनिमेषाश्च *काष्ठा त्रिंशत्तु ताः कलाः ॥
त्रिंशत्कलो मुहूर्तः स्यात् त्रिंशद्रात्र्यहनी च ते ।
अहोरात्राः पञ्चदश पक्षो मासस्तु तावुभौ ॥
ऋतुर्मासद्वयं प्रोक्तमयनं तु ऋतुत्रयम् ।
अयनद्वितयं वर्षो मानुषेयमुदाहृतः ॥
एष दैवस्त्वहोरात्रस्तैः पक्षादि च पूर्ववत् ।
देववर्षसहस्राणि द्वादशैव चतुर्युगम् ॥
चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते ।
रात्रिश्चैतावती तस्य ताभ्यां पक्षादिकल्पना ॥

इति किरणावल्यामुदयनाचार्याः ।

---

* अष्टादश निमेषा इति क्वचिदत्तहस्तलिखिते किरणावल्यास्तालपत्रपुस्तके । निमेषा दश चाष्टौ च काष्ठा इति मनुः अ० १ श्लो० ६४ ।

स्थाने वर्तमानस्य ब्रह्मणोऽपवर्गकाले मुक्तिकाले संसारे नानास्थानेषु भूयोभूयः शरीरादिपरिग्रहेण खिन्नानां गर्भवासादिविविधदुःखेन दुःखितानां प्राणिनां निशि विश्रामार्थं(१) कियत्कालं दुःखोपशमार्थं सकलभुवनपतेः सर्वत्राव्याहतप्रभावस्य महेश्वरस्य सञ्जिहीर्षा(२) संहारेच्छा भवति तत्समानकालं तदनन्तरं शरीरेन्द्रियमहाभूतोपनिबन्धकानां शरीरेन्द्रियमहाभूतारम्भकाणां सर्वात्मगतानां सर्वेष्वात्मसु समवेतानामदृष्टानां वृत्तिनिरोधः शक्तिप्रतिबन्धः स्यात् तस्मिन् सत्यनागतानां शरीरेन्द्रियमहाभूतानामनुत्पत्तिः उत्पन्नानां च विनाशार्थं महेश्वरेच्छात्माणुसंयोगेभ्यः कर्माणि जायन्ते महेश्वरेच्छा सञ्जिहीर्षालक्षणा अणवित्ति परमाणुपरिग्रहः । महेश्वरस्येच्छा चात्माणुसंयोगाश्चेति विग्रहः । तेभ्यो जातानि तेभ्यो महेश्वरेच्छात्माणुसंयोगजकर्मभ्यः शरीराणामिन्द्रियाणां ये पारम्पर्येण कारणभूता अणवस्तेषु विभागा भवन्ति विभागेभ्यस्तेषामणूनां संयोगनिवृत्तिः संयोगनिवृत्तौ सत्यां तेषामापरमाणवन्तो विनाशः तेषां शरीरेन्द्रियाणां द्व्यणुकादिविनाशप्रक्रमेण तावद्विनाशो यावत् परमाणुरिति । प्रजानामकाण्डे संहरन्नयमकारुणिको यत्किञ्चनकारी च स्यादिति यत्केनचिदुक्तं तत्रेयं प्रतिक्रिया प्राणिनां निशि विश्रामार्थमिति यद्यप्येतदुक्तं अनन्तानामात्मनामनन्तेष्वदृष्टेषु क्रमेण परिपच्यमानेषु केचिददृष्टक्षयाद् भोगादुपरमन्ते भुञ्जन्ते च केचित् अपरे तु भोगाभिमुखा इत्येवं सर्वत्र विषयप्रवृत्तौ न शरीरादीनां युगपदभावो घटते इति तदनेन पराहतम् । अदृष्टानां वृत्तिप्रतिबन्ध इति ब्रह्मणोऽपवर्गकाले निशीत्युक्तं तत्र सर्वप्राणिनां प्रबोधप्रत्यस्तमयसाधर्म्येणोपचारात् महाभूतानामप्येवं विनाश इत्याह । तथेति । यथा शरीरेन्द्रियाणामापरमाणवन्तो विनाशस्तथा महाभूतानामप्यनेनैव क्रमेणेति । परमाणुक्रियाविभागादिक्रमेणोत्तरस्मिन्नुत्तरस्मिन् सति पूर्वस्य पूर्वस्य विनाश इति । जले तिष्ठति पूर्वं पृथिव्या विनाशः तेजसि तिष्ठति जलस्य वायौ तिष्ठति तेजस इत्यर्थः । ततः प्रविभक्ताः परमाणवोऽवतिष्ठन्ते धर्माधर्मभावनाख्यसंस्कारैरनुविद्धा उपगृहीताश्चात्मानस्तावन्तमेव कालं ब्रह्मणो वर्षशतमेवावतिष्ठन्ते दिगादयोऽपि तिष्ठन्ति नित्यत्वात् किन्त्वात्मनामदृष्टवशात् पर-

---

(१) विश्रमार्थं—पा॰ १ पु॰ । तत्र भाष्येप्येवमेव ।   (२) सञ्जिहीर्षया—पा॰ २ ।

माणव: पुनर्नारिप्स्यन्ते इति प्राधान्याददृष्टवदात्मपरमाणवव्यवस्थानसंकीर्तनम् । एवं संहारक्रमं प्रतिपाद्य सृष्टिक्रमं प्रतिपादयन्नाह । ततः पुनरिति । यद्यपि तदा आत्मनां प्राणसम्बन्धो नास्ति तथापि प्राणिन इत्युक्तम् योग्यत्वात् तेषां भोगभूतये सुखदुःखानुभवोत्पत्तये महेश्वरस्य सिसृक्षा सर्जनेच्छा जायते तदनन्तरं सर्वेष्वात्मसु गता अदृष्टा वृत्तिं लभन्ते । यद्यपि युगपदुत्पद्यमानासंख्येयकार्योत्पत्तौ व्याप्रियमाणा दिगादिवन्नित्यत्वादेकैवेश्वरेच्छा क्रियाशक्तिरूपा तथाप्येषा तत्तत्कालविशेषसहकारिप्राप्तौ कदाचित्संहारार्था भवति कदाचित्सृष्ट्यर्था भवति । यदा संहारार्था तदा तदनुरोधाददृष्टानां वृत्तिनिरोध औदासीन्यलक्षणो जायते । यदा त्वसौ सृष्ट्यर्था भवेत्तदा वृत्तिलाभः स्वकार्यजननं प्रति व्यापारो भवति वृत्तिर्लब्धायैस्ते वृत्तिलब्धा इति(१) आहिताग्न्यादित्वान्निष्ठायाः पूर्वनिपातो दन्तजात इति यथा । सर्वात्मगताश्च वृत्तिलब्धाश्चादृष्टाश्च तानपेक्षन्ते ये तत्संयोगा आत्माणुसंयोगास्तेभ्यः पवनपरमाणुषु कर्माण्युत्पद्यन्ते पवनपरमाणवः समवायिकारणं लब्धवृत्त्यदृष्टवदात्मपरमाणुसंयोगोऽसमवायिकारणमदृष्टं निमित्तकारणम् । एवं कर्मोत्पत्तौ तेषां पवनपरमाणूनां परस्परसंयोगा जायन्ते तत्संयोगेभ्यश्च द्व्यणुकान्युत्पद्यन्ते तदनु त्र्यणुकानीत्यनेन क्रमेण महान् वायुः समुत्पद्यमानो नभस्याकाशे दोधूयमानः क्वचिदप्रतिहतत्वाद्वेगातिशययुक्तस्तिष्ठति । तदनन्तरं तस्मिन्नेव वायावाप्येभ्यः परमाणुभ्यस्तेनैव क्रमेण द्व्यणुकादिक्रमेण महान् सलिलनिधिरुत्पन्नः पोप्लूयमानः प्रतिरोधकाभावात् सर्वत्र प्लवमानस्तिष्ठति । तदनन्तरं जलनिधेरुत्पत्त्यनन्तरं तस्मिन्नेव जलधौ पार्थिवेभ्यः परमाणुभ्यो महापृथिवी संहता स्थिरस्वभावाऽवतिष्ठते । तदनन्तरं तस्मिन्नेव महोदधौ तैजसेभ्योऽणुभ्यो द्व्यणुकादिप्रक्रमेणोत्पन्नो महांस्तेजोराशिः केनचिदनभिभूतत्वाद्देदीप्यमानस्तिष्ठति । यद्यपि पयःपावकयोः स्वाभाविको विरोधस्तथाप्यदृष्टवशेनाधाराधेयभावो नानुपपन्नः । एवमनन्तरोक्तेन प्रक्रमेणोत्पन्नेषु महाभूतेषु महेश्वरस्याभिध्यानमात्रात् सङ्कल्पमात्रात् तैजसेभ्यः परमाणुभ्यः पार्थिवपरमाणुसहितेभ्यो महदण्डं महद्विम्बमारभ्यते विम्बारम्भे पार्थिवा अवयवा उपष्टम्भकास्तेनेदं वह्निपुञ्जप्रायं नाभूत् ।

---

(१) वृत्तिलब्धा इति । भाष्यं त्वार्षमिति किरणावलीभास्करे पद्मनाभमिश्राः ।

तस्मिन्नण्डे चत्वारि वदनकमलानि यस्य तं ब्रह्माणं सर्वलोकपितामहं सर्वेषामेव लोकानामाद्यं पुरुषं समस्तैर्भुवनैः सहोत्पाद्य प्रजानां सर्गे जनने विनियुङ्क्ते त्वमिदं कुर्विति । स च महेश्वरेण विनियुक्तो ब्रह्मातिशयज्ञानवैराग्यैश्वर्यसम्पन्नो ज्ञानं च वैराग्यं चैश्वर्यं च ज्ञानवैराग्यैश्वर्याणि अतिशयेन ज्ञानवैराग्यैश्वर्याणि तैः सम्पन्न उपचितो ज्ञानातिशयात् प्राणिनां धर्माधर्मौ यथावत्प्रत्येति वैराग्यान्न पक्षपातेन प्रवर्तते ऐश्वर्यात् कर्मफलं भोजयति । प्राणिनां कर्मविपाकं विदित्वेति । विविधेन प्रकारेण पाको विपाकः कर्मणां विपाकः कर्मविपाकस्तं विदित्वैतावदस्य कर्मफलं भविष्यतीति ज्ञात्वा कर्मानुरूपाणि ज्ञानभोगायूंषि तान् सुतान् प्रजापतीन् दक्षादीन्(१) मानसान् मनःसङ्कल्पप्रभवान् मनुदेवर्षिपितृगणान् मनून् देवानृषीन् पितृगणान् मुखबाहूरुपादतश्चतुरो वर्णान् मुखाद् ब्राह्मणान् बाहुभ्यां क्षत्रियान् ऊरुभ्यां वैश्यान् पद्भ्यां शूद्रान् अन्यानि चोच्चावचानि क्षुद्रक्षुद्रतराणि च भूतानि सृष्ट्वा आशयानुरूपैः आशेते फलोपभोगकालं यावदात्मन्यवतिष्ठते इत्याशयः कर्म तदनुरूपैर्धर्मज्ञानवैराग्यैश्वर्यैः संयोजयति यस्य यथाविधं कर्म तत्तदनुरूपेण ज्ञानादिना सम्यग्योजयति माचयाप्यन्यथा न करोतीत्यर्थः(२) । यत् खलु केचिदेवमाचचक्षिरे प्रेक्षावत्प्रवृत्तिरिष्टार्थाधिगमा स्यादनिष्टपरिहारार्था वा न चेष्टानिष्टप्राप्तिपरिहारावीश्वरे समस्तावाप्तकामे सम्भवतः तेनास्य जगन्निर्माणे प्रवृत्तिरनुपपन्ना । तत्रोत्तरम् । प्राणिनां भोगभूतये इति । परार्था सिसृक्षायां प्रवृत्तिर्न स्वार्थनिबन्धनेत्यभिप्रायः । नन्वेवं तर्हि सुखमयीमेव सृष्टिं कुर्यान्न दुःखशबलां करुणाप्रवृत्तत्वादित्यत्रैष परिहारः । प्राणिनां कर्मविपाकं विदित्वेति । परार्थं प्रवृत्तोऽपि न सुखमयीमेव करोति विचित्रकर्माशयसहायस्य कर्तृत्वादित्यर्थः । न चैवं सति करुणाविरोधो दुःखोत्पादस्य वैराग्यजननद्वारेण परमपुरुषार्थहेतुत्वात् । यदि धर्माधर्मावपेक्ष्य करोति नास्य स्वाधीनं कर्तृत्वमित्यनीश्वरतादोष इत्यस्यायं प्रतिसमाधिः । आशयानुरूपैर्धर्मज्ञानवैराग्यैश्वर्यैः संयोजयतीति । स हि सर्वप्राणिनां कर्मानुरूपं फलं प्रयच्छन् कथमनीश्वरः स्यादिति भावः । न हि योग्यतानुरूप्येण भृत्यानां

(१) दक्षाद्यान्–पा॰ २ । ४ पु॰ ।
(२) न योजयतीत्यर्थः–पा॰ २ पु॰ ।

फलविशेषप्रदः प्रभुरप्रभुर्भवति कल्पादावुत्पन्नानां प्राणिनां सर्वशब्दार्थेष्वव्युत्पन्नानां संकेतस्याशक्यकरणत्वाच्छब्दव्यवहारानुपपत्तिरिति चोदनायां प्रत्यवस्थानबीजमिदम् । मानसानिति योनिजशरीरो हि महता गर्भवासादिदुःखप्रबन्धेन विलुप्तसंस्कारो जन्मान्तरानुभूतस्य सर्वस्य न स्मरति । ऋषयः प्रजापतयो मनवस्तु मानसा अयोनिजशरीरविशिष्टादृष्टसम्बन्धिनो दृष्टसंस्काराः कल्पान्तरानुभूतं सर्वमेव शब्दार्थव्यवहारं सुप्तप्रतिबुद्धवत्प्रतिसन्दधते प्रतिसन्दधानाश्च परस्परं बहवो व्यवहरन्ति तेषां व्यवहारात् तत्कालवर्तिनां प्राणिनां व्युत्पत्तिस्तद्व्यवहाराच्चान्येषा(१)मित्युत्पद्यते व्यवहारपरम्परया शब्दार्थव्युत्पत्तिरित्यर्थः ॥

किं पुनरीश्वरसद्भावे प्रमाणम् आगमस्तावदनुमानं च महाभूतचतुष्टयमुपलब्धिमत्पूर्वकं कार्यत्वात् यत्कार्यं तदुपलब्धिमत्पूर्वकं यथा घटः । कार्यं च महाभूतचतुष्टयं तस्मादेतदप्युपलब्धिमत्पूर्वकम् । प्रमाणेन पूर्वकोट्यनुपलब्धेरसिद्धं पृथिव्यादिषु कार्यत्वमिति चेत् तदयुक्तं सावयवत्वात् यत् सावयवं तत्कार्यं यथा घटः सावयवं च पृथिव्यादि तस्मादेतदपि कार्यमेव । ननु व्याप्तिग्रहणादनुमानप्रवृत्तिः कार्यत्वबुद्धिमत्पूर्वकत्वयोश्च व्याप्तिग्रहणमशक्यं घटादिषु कर्तृप्रतीतिकाले एवाङ्कुरादिषूत्पद्यमानेषु तदभावप्रतीतेः न चाङ्कुरादीनामपि पक्षत्वमिति न्याय्यम् गृहीतायां व्याप्तावनुमानप्रवृत्तिकाले प्रतिवाद्यपेक्षया पक्षादिप्रविभागः इह तु सर्वदैव प्रतिपक्षप्रतीत्याक्रान्तत्वाद्व्याप्तिग्रहणमेव न सिद्ध्यतीत्युक्तम् । अत्र प्रतिविधीयते यदि चैवं द्वैतानुपलम्भाद्व्याप्तिग्रहणाभावः तदानीं मीमांसभाष्यकृदभिमतं सामान्यतोदृष्टमादित्यगत्यनुमानमपि न सिद्ध्यति तत्रापि देवदत्तगतिपूर्वकदेशान्तरप्राप्तिग्रहणकाले एव नक्षत्रादिषु देशान्तरप्राप्तिमात्रोपलम्भात् अथ तेषु देशविप्रकर्षेणापि गतेरनुपलब्धौ सम्भवन्त्यां न तया व्याप्तिग्रहणहेतोर्निरुपाधिप्रवृत्तस्य भूयोदर्शनस्य प्रतिरोधस्तुल्यकक्ष्यत्वाभावात् । एवं चेत् अत्राशरीरत्वेनाभ्युपेतस्य कर्तुः स्वरूपविप्रकर्षेणाप्यङ्कुरादिष्वनुपलम्भसम्भवान्न तेन निरुपाधिप्रवृत्तस्य भूयोदर्शनस्य सामर्थ्यमुपहन्यते इति समानम् । अपि च । भोः किमनुमानेन(२)

(१) तद्व्यवहाराच्चापरेषा–पा॰ २ पु॰ ।
(२) किमनेन–पा॰ २ पु॰ ।

कर्तृमात्रं साध्यते पृथिव्यादिनिर्माणसमर्थो वा कर्तृमात्रसाधने तावद-भिप्रेतासिद्धिः न ह्यस्मदादिसदृशः कर्ताऽभिप्रेतो भवताम् न च तेनेदं पृथिव्यादिकार्यमर्वाग्दृशा शक्यनिर्माणं पृथिव्यादिनिर्माणसमर्थस्तु कर्ता न सिद्ध्यत्यनन्वयात् अन्वयबलेन हि दृष्टान्तदृष्टकर्तृसदृशः सिद्ध्यतीति नायं प्रसङ्गः कर्तृविशेषस्याप्रसाधनात् व्याप्तिसामर्थ्याद्बुद्धिमत्पूर्वकत्वे सामान्ये साध्यमाने पृथिव्यादिनिर्माणसामर्थ्यलक्षणोऽपि विशेषः सिद्ध्यत्येव निर्विशेषस्य सामान्यस्य सिद्ध्यभावात् । ननु मा सिद्ध्यतु सामान्यमिति चेन्न कार्यत्वेन सह तद्व्याप्तेरप्रतिक्षेपत्वात् यदि हि व्याप्तमपि न सिद्ध्यति धूमादप्यग्नि-सामान्यं न सिद्ध्येत् अग्निविशेषस्यानन्वितस्यासिद्धेः निर्विशेषस्यानवस्था-नात् । अथेदमुच्यते द्वयमनुमानस्य स्वरूपं व्याप्तिः पक्षधर्मता च तत्र व्याप्तिसामर्थ्यात् सामान्यं सिद्ध्यति पक्षधर्मताबलेन चाभिप्रेतो विशेषः पर्व-ताद्यवच्छिन्नवह्निलक्षणात्मा(१) सिद्ध्यति । अन्यथा पक्षधर्मतायाः क्वोपयोगः क्व चानुमानस्य गृहीतग्राहिणः प्रामाण्यम् । एवं चेत् ईश्वरानुमानेऽपि तुल्यम् अन्यत्राभिनिवेशात् । अथ मतं सिद्ध्यत्यनुमाने विशेषोऽपि यत्र प्रमाण-विरोधो नास्ति तथाहि धूमात्पर्वतनितम्बवृत्ति(२)वह्निविशेषसिद्धौ कानामानुप-पत्तिः दृष्टो हि देशकालादिभेदः स्वलक्षणानाम् ईश्वरानुमाने तु विशेषो न सि-द्ध्यति प्रमाणविरोधात् तथाहि नात्र शरीरपूर्वकत्वं साधनीयम् शरीरे सत्यव-श्यमिन्द्रियप्राप्तावतीन्द्रियोपादानोपकरणादिकारकशक्तिपरिज्ञानासम्भवे सति कर्तृत्वा(३)सम्भवात् । अशरीरपूर्वकत्वं चाशक्यसाधनं सर्वोऽपि कर्ता कारकस्वरूप-मवधारयति तत इच्छतीदमहमनेन निर्वर्तयामीति ततः प्रयतते(४) तदनु कायं व्यापारयति ततः कारणान्यधितिष्ठति ततः करोति अनवधारयन्ननिच्छ-न्नप्रयतमानः कायमव्यापारयन्न करोतीत्यन्वयव्यतिरेकाभ्यां बुद्धिवच्छरीरमपि कार्योत्पत्तावुपायभूतं निखिलोपाधिग्रहणे व्याप्तिग्राहकप्रमाणादेवावधारितं न श-क्यते प्रहातुं वह्नेरिवेन्धनविकारसामर्थ्यं धूमानुमाने तत्परित्यागे च बुद्धिरपि परित्यज्यताम्(५) प्रभावातिशयादशरीरवदबुद्धिमानेवायमीश्वरः करिष्यति उपादानोपकरणादिस्वरूपानभिज्ञो न शक्नोतीति चेत् कुत एतत् तथानुपल-

(१) वह्निलक्षणः-पा० २ पु० । (२) नितम्बवर्त्ति-पा० २ । ४ पु० ।
(३) कर्तृता-पा० १ पु० । (४) प्रवर्तते-पा० २ । ४ पु० । (५) त्याज्यताम्-पा० २ पु० ।

म्भादिति चेत् फलितं ममापि मनोरथद्रुमेण न तथा यावदिच्छा प्रयत्नव्यवहिता कार्योत्पत्तावुपयुज्यते यथेदमव्यवहितव्यापारं शरीरम्। एवं तर्हि का गतिरत्र बुद्धिमत्कर्तृपूर्वकत्वसामान्यस्य अगतिरेव उभयोरपि शरीरित्वाशरीरित्वविशेषयोरनुपपत्तेः निर्विशेषस्य सामान्यस्य सिद्ध्यभावात् किमनुमानस्य दूषणम् न किञ्चित् पुरुष एवायं विशेषाभावाच्छशविषाणायमाने साधनानर्हे सामान्ये साधनं प्रयुञ्जानो निगृह्यते यथा कश्चिन्निशितं कृपाणमच्छेद्यमाकाशं प्रति व्यापारयन्(१)। अथानुमानदूषणं विना न तुष्यति भवान् तदिदमशरीरिपूर्वकत्वानुमानं व्याप्तिग्राहकप्रमाणबाधितत्वात् कालात्ययापदिष्टम् व्याप्तिबलेन चाभिप्रेतमशरीरित्वविशेषं विरुन्धद्विशेषविरुद्धं ततश्च विरुद्धावान्तरप्रभेद(२) एवेति पूर्वपक्षसंक्षेपः। अत्र प्रतिसमाधिः। किं शरीरित्वमेव कर्तृत्वमुत परिदृष्टसामर्थ्यकारकप्रयोजकत्वं न तावच्छरीरित्वमेव कर्तृत्वम् सुषुप्तस्योदासीनस्य च कर्तृत्वप्रसङ्गात् किन्तु परिदृष्टसामर्थ्यकारकप्रयोजकत्वम्। तस्मिन् सति कार्योत्पत्तेः तच्चाशरीरस्यापि निर्वहति यथा स्वशरीरप्रेरणायामात्मनः। अस्ति तत्राप्यस्य स्वकर्मोपार्जितं तदेव शरीरमिति चेत् सत्यमस्ति परं प्रेरणोपायो न भवति स्वात्मनि क्रियाविरोधात् प्रेर्यतयास्तीति चेत् ईश्वरस्यापि प्रेर्यः परमाणुरस्ति। ननु स्वशरीरे प्रेरणाया इच्छाप्रयत्नाभ्यामुत्पत्तेरिच्छाप्रयत्नयोश्च सति शरीरे भावादसत्यभावात् अस्ति तस्य(३) स्वप्रेरणायामिच्छाप्रयत्नजननद्वारेणोपायत्वमिति चेन्न तस्येच्छाप्रयत्नयोरुपजननं प्रत्येव कारकत्वात् लब्धात्मकयोरिच्छाप्रयत्नयोः प्रेरणाकरणकाले तु तदनुपायभूतमेव शरीरं कर्मत्वादिति व्यभिचारः अनपेक्षितशरीरव्यापारस्येच्छाप्रयत्नमात्रसचिवस्यैव चेतनस्य कदाचिदचेतनव्यापारं प्रति सामर्थ्यदर्शनात् बुद्धिमदव्यभिचारि तु कार्यत्वमितीश्वरसिद्धिः। इच्छाप्रयत्नोत्पत्तावपि शरीरमपेक्षणीयमिति चेत् अपेक्षतां यत्र तयोरागन्तुकत्वम् यत्र पुनरिमौ स्वाभाविकावासाते तत्रास्यापेक्षणं(४) व्यर्थम्। न च बुद्धीच्छाप्रयत्नानां नित्यत्वे कश्चिद्विरोधः दृष्टा हि रूपादीनां गुणानामाश्रयभेदेन द्वयी गतिः नित्यतानित्यता च तथा बुद्ध्यादानामपि भविष्यतीति। सेयमीश्वरवादे वादिप्र-

(१) निगृह्यते इति सम्बन्धः।
(२) विशेष-पा० २ पु०।
(३) तत्र-पा० २।४ पु०।
(४) तत्र तस्यापेक्षणं-पा० १ पु०।

तिवादिनोः परा काष्ठा अतः परं प्रपञ्चः । आत्माधिष्ठिताः परमाणवः प्रवर्तिष्यन्ते इति चेन्न तेषां स्वकर्मोपार्जितेन्द्रियगणाधीनसंविदां शरीरोत्पत्तेः[1] सर्वविषयावबोधविरहात् । अस्त्यात्मनामपि सर्वविषयव्यापि सहजचैतन्यमिति चेन्न सहजं शरीरसम्बन्धभाजां तत्केन विप्लुतं[2] येनेदं सर्वचापूर्ववदवभासयति । शरीरावरणतिरोधानात् तदात्मन्येव समाधीयते न बहिर्मुखं भवतीति चेत् व्यापकत्वेन तस्य विषयसम्बन्धानुच्छेदेन नित्यत्वेन च विषयप्रकाशस्वभावस्यानिवृत्तौ का तिरोधानवाचो युक्तिः वृत्तिप्रतिबन्धश्चैतन्यतिरोधानमिति चेत् कथं तर्हि शरीरिणां विषयग्रहणं क्वचिदस्य वृत्तयो न निरुद्ध्यन्ते इति चेत् कुतोऽयं विशेषः इन्द्रियप्रत्यासत्तिविशेषात् यद्येवमिन्द्रियाधीनश्चैतन्यस्य विषयेषु वृत्तिलाभो न सन्निधिमात्रनिबन्धनः सत्यपि व्यापकत्वे सर्वार्थेषु वृत्त्यभावादिन्द्रियवैयर्थ्यप्रसङ्गाच्च साधूक्तमशरीरिणामात्मनां न विषयावबोध इति । तथा चैके वदन्ति । पराञ्चि खानि व्यतृणात् स्वयम्भूस्तस्मात् पराङ्[3] पश्यति नान्तरात्मेति । अनवबोधे च तेषां नाधिष्ठातार इति तेभ्यः परः सर्वार्थदर्शिसहजज्ञानमयः कर्तृस्वभावः कोप्यधिष्ठाता कल्पनीयः चेतनमधिष्ठातारमन्तरेणाचेतनानां प्रवृत्त्यभावात् । स किमेकोऽनेको वा एक इति वदामः । बहूनामसर्वज्ञत्वे ऽस्मदादिवदसामर्थ्यात् सर्वज्ञत्वे त्वेकस्यैव सामर्थ्यादपरेषामनुपयोगात् न च समप्रधानानां भूयसां सर्वदैकमत्ये हेतुरस्तीति कदाचिदनुत्पत्तिरपि कार्यस्य स्यात् । एकाभिप्रायानुरोधेन सर्वेषां प्रवृत्तावेकस्येश्वरत्वं नापरेषाम् मठपरिषदामिव कार्योत्पत्त्यनुरोधेन सर्वेषामविरोधे प्रत्येकमनीश्वरत्वम् । तदेवं कार्यविशेषेण सिद्धस्य कर्तृविशेषस्य सर्वज्ञत्वान्न कुचचिद्वस्तुनि विशेषानुपलम्भः अतो न तन्निबन्धनं मिथ्याज्ञानं मिथ्याज्ञानाभावे च न तन्मूलौ रागद्वेषौ तयोरभावान्न तत्पूर्विका प्रवृत्तिः प्रवृत्त्यभावे च न तत्साध्यौ धर्माधर्मौ तयोरभावात् तज्जयोरपि सुखदुःखयोरभावः सर्वदैव चानुभवसद्भावात् स्मृतिसंस्कारावपि नासाते इत्यष्टगुणाधिकरणो भगवानीश्वर इति केचित् । अन्ये तु बुद्धिरेव तस्याव्याहता क्रियाशक्तिरित्येवंवदन्त इच्छाप्रयत्नावप्यनङ्गीकुर्वाणाः षड्गुणाधिकरणोयमित्याहुः । स किं

---

(१) विनेति पूरणीयम् । (२) विलुप्तं-पा० १ पु० । (३) परान्-इति क्वचित् ।

बद्धो मुक्तो वा न तावद्बद्धो बन्धनसमाख्यातस्य[१] बन्धहेतोः क्लेशादेरसम्भवात्। मुक्तोपि न भवति बन्धविच्छेदपर्यायत्वान्मुक्तेः। नित्यमुक्तस्तु स्यात् यदाह तत्रभवान् पतञ्जलिः क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर इति॥

**आकाशकालदिशामेकैकत्वादपरजात्यभावे[२] पारिभाषिक्यस्तिस्रः सञ्ज्ञा भवन्ति। आकाशः[३] कालो दिगिति। तत्राकाशस्य गुणाः शब्दसंख्यापरिमाणपृथक्त्वसंयोगविभागाः। [४]शब्दः प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वादयावद्द्रव्यभावित्वादाश्रयादन्यत्रोपलब्धेश्च न स्पर्शवद्विशेषगुणः। बाह्येन्द्रियप्रत्यक्षत्वादात्मान्तरग्राह्यत्वादात्मन्यसमवायादहङ्कारेण विभक्तग्रहणाच्च नात्मगुणः। श्रोत्रग्राह्यत्वाद्वैशेषिकगुणभावाच्च न दिक्कालमनसाम्। परिशेषा[५]द्गुणो भूत्वा आकाशस्याधिगमे लिङ्गम्। शब्दलिङ्गाविशेषा[६]देकत्वं सिद्धम्। तदनुविधानादेकपृथक्त्वम्[७]। विभववचनात् परममहत्परिमाणम्[८]। शब्दकारणत्ववचनात्[९] संयोगविभागाविति। अतो गुणवत्त्वा[१०]दनाश्रितत्वाच्च द्रव्यम्। समानासमानजातीयकारणाभावाच्च नित्यम्। सर्वप्राणिनां च शब्दोपलब्धौ निमित्तं[११] श्रोत्रभावेन। श्रोत्रं पुनः श्रवणविवरसञ्ज्ञ-**

---

(१) बन्धनसञ्ज्ञितस्य इति गुरवः।
(२) साजात्यभावे-पा॰ ६ पु॰।
(३) आकाशं-पा॰ ५ पु॰।
(४) तत्र-इत्यधिकं ५ पु॰।
(५) पारिशेष्यात्-पा॰ ६। ४ पु॰।
(६) शब्दलिङ्गाविशेषत्वा-पा॰ १।
(७) विधानात् पृथक्त्वं-पा॰ ५ पु॰। विधानादेव पृथक्त्वं-पा॰ २ पु॰।
(८) महत्परिमाणम्-पा॰ १ पु॰।
(९) शब्दकारणवचनात्-पा॰ ५ पु॰।
(१०) गुणवचनवत्त्वा-पा॰ ६ पु॰।
(११) शब्दोपलम्भैकनिमित्तं-पा॰ ५ पु॰। शब्दोपलब्धिनिमित्तं-पा॰ १ पु॰।

**को नभोदेशः(१) शब्दनिमित्तोपभोगप्रापकधर्माधर्मो-पनिबद्धस्तस्य च नित्यत्वे सत्युपनिबन्धकवैकल्याद्बा-धिर्यमिति ॥**

आकाशादीनां त्रयाणां संक्षेपार्थमेकेन ग्रन्थेन वैधर्म्यं कथयति । आ-काशकालदिशामिति । आकाशस्य कालस्य दिशश्चैकैकत्वादपरजातिर्नास्ति तस्या व्यक्तिभेदाधिष्ठानत्वात् । अपरजात्यभावे चाकाश इति काल इति दिगिति तिस्रः सञ्ज्ञाः पारिभाषिक्यो न पृथिव्यादिसञ्ज्ञावदपरजातिनैमि-त्तिक्य इत्यर्थः । सञ्ज्ञैषामितरवैधर्म्यं यस्याः सञ्ज्ञाया विना निमित्तेन शङ्क-ग्राहिकया(२) संकेतः सा पारिभाषिकी यथायं देवदत्त इति । यस्याः पुनर्नि-मित्तमुपादाय संकेतः सा नैमित्तिकीति विवेकः । सम्प्रति प्रत्येकं निरूपणा-र्थमाह । तत्राकाशस्य गुणा इति । तेषां त्रयाणां मध्ये आकाशस्य गुणाः शब्द-संख्यापरिमाणपृथक्त्वसंयोगविभागाः शब्दादिगुणयोगोप्याकाशस्य वैधर्म्यम् । नन्वाकाशस्य सद्भावे किं प्रमाणं प्रत्यक्षमेव वियति पतति पतत्रिणि चक्षुर्व्यापा-रेणेहायं पक्षी प्राप्त इहेतिनियतदेशाधिकरणा प्रतीतिरिति चेत् तदयुक्तम् अरूपस्य द्रव्यस्य चाक्षुषत्वाभावात्(३) योप्ययमधिकरणप्रत्ययस्तत्र वितता-लोकमण्डलव्यतिरेकेण न द्रव्यान्तरं प्रतिभाति अत आकाशस्य सद्भावे परिशे-षानुमानमुपन्यस्यञ्शब्दस्य द्रव्यान्तरगुणत्वं निषेधति । शब्द इति । स्वाश्र-यस्य यत्समवायिकारणं तद्गुणपूर्वः शब्दो न भवति पटरूपादिवदाश्रयोत्पत्त्यन-न्तरमनुत्पादात् अतः सुखादिवत् स्पर्शवतां विशेषगुणो न भवति विशेषगु-णत्वप्रतिषेधे सामान्यगुणत्वं भविष्यतीति नाशङ्कनीयम् सामान्यविशेषव-त्त्वस्य बाह्यैकेन्द्रियग्राह्यत्वेन रूपादिवद्विशेषगुणत्वसिद्धेः । पार्थिवपरमा-णुरूपादयः स्पर्शवद्विशेषगुणाः अथ चाकारणगुणपूर्वकाः परमाणोरकार्यत्वात् तद्व्यवच्छेदार्थं प्रत्यक्षत्वे सतीति कृतम् । यावद्द्रव्यं शब्दो न भवति सत्येवा-श्रये शङ्खादौ तस्य विनाशात् अतोपि सुखादिवत्स्पर्शवद्विशेषगुणो न भवति तत्रापि पार्थिवपरमाणुरूपादिभिरेव व्यभिचारः तेषां सत्येवाश्रये परमाणावग्नि-

(१) नभःप्रदेशः-पा० ६ पु० ।　　(२) ग्राहिकतया-पा० १ पु० ।
(३) चाक्षुषत्वासम्भवात्-पा० २ पु० ।

संयोगेन विनाशात् तदर्थं प्रत्यक्षत्वे सतीत्यनुवर्तनीयम् । हेत्वन्तरं चाह । आश्रयादन्यत्रोपलब्धेश्च । स्पर्शवद्विशेषगुणत्वे शब्दस्य शङ्खादिराश्रयो वाच्यः स च तस्मादन्यत्र दूरे कर्णशष्कुलीदेशे समुपलभ्यते न चान्यगुणस्यान्यत्र ग्रहणमस्ति तस्मान्न स्पर्शवद्विशेषगुणः । ननु शङ्खादिदेशस्थित एव शब्दो गृह्यते इन्द्रियाणामासंसारमण्डलव्यापित्वादिति चेन्न सन्निकृष्टविप्रकृष्टयोरविशेषेणोपलब्धिः स्यात् व्यापकत्वेपीन्द्रियाणां पुरुषार्थेन हेतुना क्षोभ्यमाणानां यदाधिष्ठानदेशेभ्यो विषयग्रहणानुगुणवृत्तयो निर्गता विषयं व्यश्नुवते तदा विषयग्रहणस्य भावान्नाव्यवस्थेति चेत् विषयग्रहणार्थानीन्द्रियाणि विषयग्रहणं च वृत्तिनिबन्धनं वृत्तय एवेन्द्रियाणि तदन्येषामनुपयोगान्निष्प्रमाणकत्वाच्च । न च श्रोत्रवृत्तिर्विषयदेशं गत्वार्थमुपलभते चाक्षुषप्रतीताविव शब्देपि दिक्सन्देहानुपपत्तिप्रसङ्गात् नापि स्वाश्रयं परित्यज्य गुणस्य आगमनमस्ति न च शङ्खवर्त्तिना तेनान्तराले शब्द आरब्धव्यः स्पर्शवद्विशेषगुणस्य स्वाश्रयारब्धे द्रव्ये विशेषगुणान्तरारम्भदर्शनात् शङ्खारब्धस्य च द्रव्यस्य शङ्खश्रोत्रयोरन्तरालेनुपलम्भात् न चाप्राप्तस्य ग्रहणमस्त्यतिप्रसङ्गात् तस्माच्छङ्खादिगुणत्वे शब्दस्यानुपलब्धिरेव। अस्ति च तदुपलब्धिः सैव तस्य द्रव्यान्तरगुणत्वं साधयति यस्मिन्नन्तरालव्यापिनि शब्दस्य शब्दान्तरारम्भक्रमेण श्रोत्रप्रत्यासन्नस्य ग्रहणं स्यात् । आत्मगुणनिषेधार्थमाह । बाह्येन्द्रियप्रत्यक्षत्वादिति । श्रोत्रं तावद्बाह्येन्द्रियं नियमेन बाह्यार्थप्रकाशकत्वाच्चक्षुर्वत् तद्ग्राह्यश्च शब्दस्तत्प्रतीतिस्तद्भावभावित्वात् यश्च बाह्येन्द्रियग्राह्यो नासावात्मगुणो यथा रूपादिः तस्मादयमपि न तद्गुण इत्यर्थः । इतोपि शब्दो नात्मगुणः आत्मान्तरग्राह्यत्वात् अनेकप्रतिपत्तृसाधारणत्वादित्यर्थः । या खलु वीणावेणवादिजा शब्दव्यक्तिः सन्ततिद्वारेणैकेन पुरुषेण प्रतीयते सैवापरेणापि तद्देशवर्त्तिना प्रतीयते न त्वेवं सुखादिरित्यात्मगुणवैधर्म्यान्नात्मगुणः आत्मन्यसमवायादपि शब्दो नात्मगुणो रूपादिवत् । आत्मन्यसमवायस्तस्यासिद्ध इति चेन्न रूपादिवद्बहिर्मुखतया प्रतीतेरात्मगुणानां चान्तरत्वेनावगमात् । इतश्च नायमात्मगुणः अहङ्कारेणाहमितिप्रत्ययेन विभक्तस्य व्यधिकरणस्य ग्रहणात् यः खल्वात्मगुणः सोहङ्कारसमानाधिकरणो गृह्यते यथा सुख्यहं दुःख्यहमिति न त्वेवं शब्दस्य ग्रहणं अतो नात्मगुणः प्रियवागहमिति व्यपदेशोस्तीति चेत् सत्यम् किन्तु तद-

भिधानशीलतया न तु तद्गुणाधिकरणत्वेन मृदङ्गादिशब्देषु तथाप्रतीत्यभावात् अस्तु तर्ह्ययं दिशः कालस्य मनसो गुणस्तत्राह । श्रोत्रग्राह्यत्वादिति । किमुक्तं स्यात् । ये दिक्कालमनसामुभयवादिसिद्धाः संयोगादयस्ते श्रोत्रग्राह्या न भवन्ति अयन्तु तद्ग्राह्यः तस्मान्न तद्गुणः दिक्कालमनसां विशेषगुणो नास्ति अयन्तु विशेषगुण इतोपि तेषां न भवतीत्याह । वैशेषिकगुणभावा(१)च्चेति । शब्दो दिक्कालमनसां गुणो न भवति विशेषगुणत्वात् सुखादिवदिति प्रयोगः । नन्वेकस्मिन्नर्थेनेकसाधनोपन्यासो व्यर्थ एकेनैव तदर्थपरिच्छेदस्य कृतत्वादिति चेत् किमेकप्रमाणावसिते प्रमाणान्तरवैयर्थ्यं फलाभावात् पुरुषेणानपेक्षितत्वाद्वा न तावत् फलं नास्ति पूर्ववदुत्तरत्रापि तदर्थप्रतीतिभावात् नापि पुरुषस्यानपेक्षा सर्वत्र यत्रातिशयमाधुर्यात् प्रत्यनुभवं सुखोत्पत्तिस्तत्र दृष्टेपि पुनःपुनर्दर्शनाकाङ्क्षा भवत्येव यथात्यन्तं प्रिये पुत्रादौ । यत्र त्वनपेक्षा तत्रापि पूर्ववदुत्तरस्यापि कारणस्य सद्भावे सति प्रवृत्तस्य न वैयर्थ्यं तद्विषयपरिच्छेदेनैवार्थेनार्थवत्त्वात् पिष्टपेषणे त्वशक्यभङ्गता(२)प्राप्तेः फलमेव न भवति अन्यदपि प्रमाणविषयपरिच्छेदमात्रफलमेवार्थक्रियाया विषयसाध्यत्वात् एकपरिच्छिन्ने द्वितीयस्य साधकतमत्वाभाव इति चेन्न स्वकार्ये तस्यैव साधकतमत्वात् अन्यथा धारावाहिकं ज्ञानमप्रमाणं स्यात् विषयस्यानतिरेकात् प्रतिज्ञानं च कालक्षणानामतिसूक्ष्माणामप्रतिभासनात् न चैवं सत्यनवस्था उपायाभावे सति विरामादित्यलम् । ननु यदि नाम पृथिव्यादिद्रव्याष्टकगुणः शब्दो न भवति तथाप्याकाशस्य सद्भावे किमायातं तत्राह । परिशेषादिति । गुणः शब्दो गुणश्च गुणिना विना न भवति न चैष पृथिव्यादीनां गुणः द्रव्यान्तरं च नास्ति तस्माद्यस्यायं गुणस्तदाकाशमिति परिशेषादाकाशस्याधिगमे प्रतिपत्तौ लिङ्गमित्यर्थनिर्देशः । प्रयोगः पुनरेवम् । द्रव्यान्तरगुणः शब्दो गुणत्वे सति पृथिव्याद्यष्टद्रव्यानाश्रितत्वात् । यस्तु द्रव्यान्तरगुणो न भवति नासौ गुणत्वे सति पृथिव्याद्यष्टद्रव्यानाश्रितो यथा रूपादिरिति व्यतिरेकी । सद्भावप्रतिपादकादेव प्रमाणादाकाशस्य शब्दगुणत्वं तावत् प्रतीतम् सम्प्रति संख्यादिगुणत्वप्रतिपादनार्थमाह । शब्दलिङ्गाविशेषादिति । शब्दो

(१) वैशेषिकगुणाभावा–पा॰ १ पु॰ । मूलेपि तथैव क्वचित् । (२) अनिवृत्तित्वमिति यावत् ।

लिङ्गमाकाशस्य शब्दश्च सर्वत्राविशिष्ट एक इत्येकरूपमेवाकाशं सिद्ध्यति भेदप्रतिपादकप्रमाणाभावादित्यर्थः। ननु शब्दोपि तारतरादिरूपेण विविध एव सत्यं न तु तेन रूपेणास्य लिङ्गता किन्तु गुणत्वेन तच्चाविशिष्टं नाश्रयभेदावगमाय प्रभवति एकस्मादप्याश्रयात् कारणभेदेन तारतरादिभेदस्य शब्दस्योत्पत्त्यविरोधात्। तदनुविधानादेकपृथक्त्वमिति। एकत्वानुविधानादेकपृथक्त्वम्। अस्ति चाकाशे भेदप्रतिपादकप्रमाणाभावात् सर्वसिद्धमेकत्वं तेन पृथक्त्वमपि सिद्धमित्यर्थः। केचिद्वस्तुनो निजं स्वरूपमेवैकत्वं न तु संख्या विशेष इत्याहुः। तेषामेको घट इति सहप्रयोगानुपपत्तिः पर्यायत्वात्। येपि पदार्थानां स्वाभाविकमेव पृथक्त्वमित्याहुः तेषामपि प्रतियोग्यनुसन्धानरहितस्यैकत्वविकल्पवत् पृथक्त्वविकल्पोपि प्राप्नोति न चैवं स्यात् अयमस्मात् पृथगिति पृथक्त्वस्य विकल्पनात् तस्मान्न तयोरेकत्वम्। विभववचनात् परममहत्परिमाणमिति। द्रव्यत्वादाकाशस्य परिमाणयोगित्वे सिद्धे विभवान्महानाकाश इति सूत्रकारवचनात् परममहत्त्वमाकाशे सिद्धम्। यद्विभु तत्परममहद्यथात्मा विभु चाकाशं तस्मादेतदपि परममहत्। विभुत्वं सर्वगतत्वं तदाकाशस्य कुतः सिद्धमिति चेत् सर्वत्र शब्दोत्पादात् यद्याकाशं व्यापकं न भवति तदा सर्वत्र शब्दोत्पत्तिर्न स्यात् समवायिकारणाभावे कार्योत्पत्त्यभावात् दिवि भुव्यन्तरिक्षे चोपजाताः शब्दा एकार्थसमवेताः शब्दत्वात् श्रूयमाणाद्यशब्दवत् श्रूयमाणाद्यशब्दयोश्चैकार्थसमवायः कार्यकारणभावेन प्रत्येतव्यो व्यधिकरणस्यासमवायिकारणत्वाभावात्। शब्दकारणत्ववचनात् संयोगविभागाविति। संयोगाद्विभागाच्छब्दाच्च शब्दस्य निष्पत्तिरिति सूत्रेणाकाशगुणं शब्दं प्रति संयोगविभागौ कारणमित्युक्तं(१) तेनाकाशे संयोगविभागौ सिद्धौ व्यधिकरणस्यासमवायिकारणत्वाभावात्। अतो गुणवत्त्वादनाश्रितत्वाच्च द्रव्यम्। यतः आकाशं गुणवत् अतो गुणवत्त्वाद् द्रव्यं घटादिवत् न केवलं गुणवत्त्वादाकाशं द्रव्यमनाश्रितत्वाच्च परमाणुवत्। समानासमानजातीयकारणाभावाच्च नित्यमिति। समानजातीयं समवायिकारणम् असमानजातीयमसमवायिकारणं निमित्तकारणं च तेषामभावान्नित्यम्। सर्वप्राणिनां शब्दोपलब्धौ निमित्तमिति। नन्वेवं तर्हि सर्वेषां सर्वशब्दोपलब्धिराकाशस्य सर्वत्राविशेषा-

(१) संयोगविभागावसमवायिकारणमित्युक्तं–पा० २। ४ पु०।

दत आह । श्रोत्रभावेनेति । किं पुनः श्रोत्रं तत्राह । श्रोत्रं पुनरिति । श्रूयतेऽनेनेति श्रवणं श्रवणं च तद्विवरं चेति श्रवणविवरं तदेव सञ्ज्ञा यस्य नभोदेशस्य स नभोदेशः श्रोत्रं तत्पिधाने शब्दस्यानुपलम्भात् । तस्य विशेषणमाह । शब्दनिमित्तेत्यादिना । शब्दनिमित्त उपभोगः सुखदुःखानुभवस्तस्य प्रापकाभ्यां धर्माधर्माभ्यामुपनिबद्धः सहकृत इति । अयमर्थः । यस्य बाह्यैकेन्द्रियग्राह्यविशेषगुणग्राहकं यदिन्द्रियं तत्तद्गुणकं यथा रूपग्राहकं चक्षू रूपाधिकरणं श्रोत्रं च तथाभूतस्य शब्दस्य ग्राहकं तस्मात्तदपि शब्दगुणकं शब्दश्चाकाशगुण इति निर्णीतं तेनाकाशमेव तावच्छ्रोत्रं तच्च व्यापकमपि न सर्वत्र शब्दमुपलम्भयति प्राणिनामदृष्टवशेन कर्णशष्कुल्यधिष्ठाननियतस्यैव तस्येन्द्रियत्वात् यथा सर्वगतत्वेप्यात्मनो देहप्रदेशे ज्ञातृत्वं नान्यत्र शरीरस्योपभोगार्थत्वात् । अन्यथा तस्य वैयर्थ्यात् । नन्वेवमपि बधिरस्य शब्दोपलब्धिः स्यात् । कर्णशष्कुलीसद्भावा(१)दत्राह । तस्य चेति । तस्याकाशस्य नित्यत्वेप्युपनिबन्धकयोर्धर्माधर्मयोः सहकारिभूतयोर्वैकल्यादभावाद्बाधिर्यम् । इतिशब्दः समाप्तौ ॥

**कालः परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययलिङ्गम् । तेषां विषयेषु पूर्वप्रत्ययविलक्षणाना(२)मुत्पत्तावन्यनिमित्ताभावा(३)द्यदत्र निमित्तं स कालः । सर्वकार्याणां चो(४)त्पत्तिस्थितिविनाशहेतुस्तद्व्यपदेशात् । क्षणलवनिमेषकाष्ठाकलामुहूर्तयामाहोरात्रार्धमासमासर्त्वयनसंवत्सरयुगकल्पमन्वन्तरप्रलयमहाप्रलयव्यवहारहेतुः(५) । तस्य गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागाः । काललिङ्गाविशेषादेकत्वं सिद्धम् । तदनुविधानात् पृथक्त्वम् । कारणे काल इतिवचनात् परममहत्परिमाणम् । कारणप-**

(१) भावात्-पा॰ २ पु॰ ।
(२) प्रत्ययानां-इत्यधिकं ६ पु॰ ।
(३) निमित्तासम्भवाद्-पा॰ ६ पु॰ ।
(४) सर्वकार्याणामुत्पत्ति-पा॰ ५ । ६ पु॰ ।
(५) हेतुश्च-पा॰ ५ पु॰ ।

**रत्वा(१)दिवचनात् संयोगः । तद्विनाशकत्वाद्विभाग इति। तस्याकाशवद्द्रव्यत्वनित्यत्वे सिद्धे(२) काललिङ्गाविशेषादञ्जसैकत्वेपि सर्वकार्याणा(३)मारम्भक्रियाभिनिर्वृत्तिस्थितिनिरोधोपाधिभेदान्मणिवत्पाचकवद्वा नानात्वोपचार इति ॥**

कालस्य निरूपणार्थमाह । काल इति । दिग्विशेषापेक्षया यः परस्तस्मिन्नपर इति प्रत्ययः यश्चापरस्तस्मिन् पर इति प्रत्ययः परापरयोर्व्यतिकरो(४)व्यत्ययः तथा च युगपत्प्रत्ययोऽयुगपत्प्रत्ययश्च चिप्रप्रत्ययश्चिरप्रत्ययश्च काललिङ्गम् । ननु कालस्याप्रत्यक्षत्वात् तेन सह परापरादिप्रत्ययानां व्याप्तिग्रहणाभावात् कुतो लिङ्गत्वमत आह । तेषामिति । तेषां युगपदादिप्रत्ययानां विषयेषु द्रव्यादिषु पूर्वप्रत्ययविलक्षणानां द्रव्यादिप्रत्ययविलक्षणानामुत्पत्तावन्यस्य निमित्तस्याभावात् । एतदुक्तं भवति । द्रव्यादिषु विषयेषु पूर्वापरादिप्रत्यया जायन्ते न चैषां द्रव्यादयो निमित्तं तत्प्रत्ययविलक्षणत्वात् न च निमित्तमन्तरेण कार्यस्योत्पत्तिरस्ति तस्माद्यदत्र निमित्तं स काल इति । आदित्यपरिवर्तनाल्पीयस्त्वभूयस्त्वनिबन्धनो युवस्थविरयोः परापरव्यवहार इत्येके तदयुक्तम् । आदित्यपरिवर्तनस्य युवस्थविरयोः सम्बन्धाभावादसम्बद्धस्य निमित्तत्वे चातिप्रसङ्गात् । सहभावो यौगपद्यमित्यपरे । तदसङ्गतम् । कालानभ्युपगमे सहार्थाभावात् कस्यांचित् क्रियायां भावानामन्योन्यप्रतियोगित्वं सहार्थ इति चेन्न । अनुत्पन्नस्थितनिरुद्धाना(५)मन्योन्यप्रतियोगित्वाभावात् सहभवतां च प्रतियोगित्वे कालस्याप्रत्याख्यानमेवेत्युक्तम् । एवमयुगपदादिप्रत्यया अपि समर्थनीयाः । कालस्याभेदात् कथं प्रत्ययभेद इति चेत् सामग्रीभेदात् वस्तुद्वयस्योत्पादसद्भावयोर्यदेकेन ज्ञानेन ग्रहणं तत्सहकारिणा कालेन परापरप्रत्ययो जन्यते भूयसामुत्पादव्यापारयोरेकग्रहणसहकारिणा युगपत्प्रत्ययः कार्यस्योत्पादविनाशयोरन्तर्वर्तिनां क्रियाक्षणानां(६) भूयस्त्वाल्पीयस्त्वग्रहणसहकारिणा चिरचिप्रप्रत्ययाविति यथासम्भवं वाच्यम् । ननु तत्तन्निमित्तनिबन्धन एवास्तु

(१) कारणमहत्त्वा–पा० ५ पु० । (२) तस्याकाशवद्द्रव्यत्वनित्यत्वे सिद्धे–इति नास्ति १ पु० ।
(३) पूर्वभूतकार्याणां–पा० ५ पु० । (४) व्यतिकरयोः–पा० २ पु० ।
(५) स्थितविरुद्धानां–इति क्वचित् । (६) क्रियालक्षणानां–पा० १ पु० ।

प्रत्ययभेदः कृतं कालेन। न। असति तस्मिन् वस्तूत्पादाभावात्। न तावदत्यन्तासतो गगनस्योत्पादः नाप्यत्यन्तासतो नरविषाणस्य किन्तु प्रागसतः कालासत्त्वे चाभावविशेषणस्य प्राक् शब्दार्थस्याभावान्नायं विशेषः सिद्ध्यतीति न कस्यचिदुत्पत्तिः स्यात्। अप्रत्यक्षेण कालेन कथं विशिष्टा प्रतीतिरिति चेत् तत्राह कश्चित् विशिष्टप्रत्ययस्योत्पत्ताविन्द्रियवत् कारणत्वं कालस्य न तु दण्डादिवद्विशेषणत्वमिति। तदसारम्। बोधैकस्वभावस्य ज्ञानस्य विषयसम्बन्धमन्तरेण विशेषान्तराभावात् तस्मादन्यथोच्यते युवस्थविरयोः शरीरावस्थाभेदेन तत्कारणतया कालसंयोगे ऽनुमिते सति पश्चात् तयोः कालविशिष्टतावगितः प्रत्येतुरेकत्वात् प्रमाणान्तरोपनीतस्यापि विशेषणत्वाविरोधात् यथा सुरभिचन्दनमिति यथा वा मीमांसकानामघटं भूतलमिति घटादिषु तु मूर्तद्रव्यत्वेनावस्थाभेदेन वा शरीरवत्कालसम्बन्धे ऽनुमिते तद्विशिष्टो युगपदादिप्रत्ययो जातः पश्चात् कार्यत्वाद्विप्रतिपन्नं प्रति काललिङ्गत्वमित्यनवद्यम्। सर्वकार्याणां चोत्पत्तिस्थितिविनाशहेतुः। अत्र युक्तिमाह। तद्व्यपदेशादिति। तेन कालेनोत्पत्त्यादीनां व्यपदेशात् उत्पत्तिकालो विनाशकाल इत्यादिव्यपदेशात् कालस्य तत्र हेतुत्वमित्यर्थः। कार्यान्तरमपि तस्य कथयति। क्षणलवेत्यादि। निमिषस्य चतुर्थो भागः क्षणः क्षणद्वयेन लवः अक्षिपक्ष्मकर्मोपलक्षितकालो निमेष इत्यादि गणितशास्त्रानुसारेण प्रत्येतव्यम्(१)। एवं धर्मिणि सिद्धे तस्य गुणान् कथयति। तस्य गुणा इति। कालस्य द्रव्यत्वात् संख्यादियोगे सिद्धे तद्विशेषप्रतिपादनार्थमाह। काललिङ्गाविशेषादिति। कालस्य लिङ्गानां युगपदादिप्रत्ययानामविशेषादेकत्वं कालस्य भेदे प्रमाणान्तराभावादित्यर्थः। ननु युगपदादिप्रत्ययभेद एव तद्भेदप्रतिपादकः नैवम् कालाभेदेपि सहकारिभेदात् प्रत्ययभेदोपपत्तेः। तदनुविधानात् पृथक्त्वमिति। एकत्वस्य पृथक्त्वेनानुविधानं साहचर्यनियमः तेनैकत्वादेकपृथक्त्वसिद्धिः। कारणे काल इति वचनात् परममहत्परिमाणमित्यनेन कारणे कालाख्येति सूत्रं लक्षयति। युगपदादिप्रत्ययानां कारणे कालाख्या कालसञ्ज्ञेति सूत्रार्थः।

---

(१) तत्र उत्पन्नं द्रव्यं यावदगुणं उत्पद्यते चान्त्यतन्तुसंयोगे वा यावच्च पट उत्पद्यते कर्मणि यावच्च विभागस्तावत् कालः क्षणः। अथवा सामग्री कार्यरहिता क्षण इति संक्षेपः। अक्षिपक्ष्मकर्मैकं निमेष इत्यादि गणितशास्त्रानुसारेण ग्राह्यमिति किरणावल्यामुदयनाचार्यः।

तेन व्यापकः कालो लभ्यते युगपदादिप्रत्ययानां सर्वत्र भावादित्यभिप्रायः। कारणपरत्वादिवचनात् संयोग इति। कारणपरत्वात् कारणापरत्वाच्च परत्वापरत्वे इति सूत्रे कारणपरत्वशब्देन कालपिण्डसंयोगोऽभिहितः। तेनास्य संयोगगुणत्वं सिद्धम्। तद्विनाशकत्वाद्विभाग इति। तस्य संयोगस्य कृतकत्वादवश्यं विनाशिनो विभागो विनाशकः सर्वत्राश्रयविनाशाभावादतः काले विभागसिद्धिर्व्यधिकरणस्य विभागस्याविनाशकत्वात्। तस्याकाशवद्द्रव्यत्वनित्यत्वे सिद्धे। यथा गुणवत्त्वादनाश्रितत्वाच्चाकाशं द्रव्यं तथा कालोपि यथा समानासमानजातीयकारणाभावान्नित्यमाकाशं तथा कालोपि। यद्येकः कालः कथं तत्रानेकव्यपदेश इत्याह। काललिङ्गाविशेषादिति। काललिङ्गानां परापरादिप्रत्ययानामविशेषाद्भेदाप्रतिपादकत्वादञ्जसा मुख्यया वृत्त्या कालस्यैकत्वेपि सिद्धे नानात्वोपचारान्नानात्वव्यपदेशः। कुतः। सर्वेषां कार्याणामारम्भ उपक्रमः क्रियाया अभिनिर्वृत्तिः क्रियायाः परिसमाप्तिः स्थितिः स्वरूपावस्थानं निरोधो विनाशः एषामुपाधीनां भेदान्नानात्वव्यपदेशः यथैको मणिः स्फटिकादिर्नीलाद्युपाधिभेदान्नील इति पीत इति व्यपदिश्यते तथा कालोप्येक एवोपाधिभेदादारम्भकाल इति क्रियाभिव्यक्तिकाल इति निरोधकाल इति व्यपदिश्यते इत्यर्थः। मणेरुपाधिसम्बन्धो न वास्तवः कालस्य तु क्रियासम्बन्धो वास्तव इति प्रतिपादयितुं दृष्टान्तान्तरमाह। पाचकेति (१)। यथैकस्य पुरुषस्य पचनादिक्रियायोगात् पाचक इति पाठक इति व्यपदेशः तथा कालस्यापि न तु प्रारम्भादिक्रियैव कालो विलक्षणबुद्धिवेद्यत्वादिति॥

**दिक् पूर्वापरादिप्रत्ययलिङ्गा। मूर्तद्रव्यमवधिं कृत्वा मूर्तेष्वेव द्रव्येष्वेतस्मादिदं(२) पूर्वेण दक्षिणेन पश्चिमेनोत्तरेण पूर्वदक्षिणेन दक्षिणापरेण अपरोत्तरेण(३) उत्तरपूर्वेण चाधस्तादुपरिष्टाच्चेति(४) दश प्रत्यया यतो भवन्ति(५) सा दिगिति। अन्यनिमित्तास-**

---

(१) पाचकवद्वेति क्वचित्। (२) द्रव्येषु तस्मादिदं–पा॰ ५ पु॰।
(३) दक्षिणपश्चिमेन पश्चिमोत्तरेण–पा॰ ५ पु॰। (४) उपरिष्टादिति–पा॰ ५ पु॰।
(५) प्रत्ययापन्ना भवति–पा॰ ५ पु॰। प्रत्यया भवन्ति यतः–पा॰ ६ पु॰।

**म्भवात् । तस्यास्तु गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागाः कालवदेते सिद्धाः । दिग्लिङ्गाविशेषादञ्जसैकत्वेपि दिशः परममहर्षिभिः(१) श्रुतिस्मृतिलोकसंव्यवहारार्थं(२) मेरुं प्रदक्षिणमावर्तमानस्य भगवतः सवितुर्ये संयोगविशेषाः लोकपाल(३)परिगृहीतदिक्प्रदेशानामन्वर्थाः प्राच्यादिभेदेन दशविधाः सञ्ज्ञाः कृताः अतो(४) भक्त्या दश दिशः सिद्धाः । तासामेव देवतापरिग्रहात्(५) पुनर्दश सञ्ज्ञा भवन्ति । (६)माहेन्द्री वैश्वानरी याम्या(७) नैर्ऋती वारुणी वायव्या कौवेरी(८) ऐशानी ब्राह्मी नागी चेति ॥**

युगपदादिप्रत्ययलिङ्गत्वमिव कालस्य पूर्वापरादिप्रत्ययलिङ्गत्वं दिशो वैधर्म्यमिति प्रतिपादयन्नाह । दिक् पूर्वापरादिप्रत्ययलिङ्गेति । पूर्वमित्यपरमित्यादिप्रत्ययो लिङ्गं यस्या दिशः सा तथोक्ता । एतदेव दर्शयति । मूर्तद्रव्यमित्यादिना । अमूर्तस्य द्रव्यस्य नावधित्वं नापि पूर्वापरादिप्रत्ययविषयत्वमस्त्यनवच्छिन्नपरिमाणत्वात् अत इदमुक्तं मूर्तद्रव्यमवधिं कृत्वा मूर्तेष्वेव द्रव्येष्विदमस्मात् पूर्वेणेत्यादिप्रत्यया यतो भवन्ति सा दिगिति । एतस्मादिदं पूर्वमित्यस्मिन्नेवार्थे पूर्वेणेति निर्देशः प्रातिपदिकार्थे तृतीयोपसंख्यानात् । ननु पूर्वापरादिप्रत्ययानां कार्यत्वात् कारणमनुमीयते तत्तु दिगेवेति कुतो निश्चयस्तत्राह । अन्यनिमित्तासम्भवादिति । न तावत्पूर्वापरादिप्रत्ययानां द्रव्यमात्रं निमित्तं यथाकथञ्चिदवस्थिते द्रव्ये तेषामुत्पत्तिप्रसङ्गात् । परस्परापेक्षया द्रव्ययोरुत्पत्तिनिमित्तत्वेपि स एव दोषः उभयाभावप्रसङ्गश्चाधिकः क्रियागुणादिनिमित्तत्वे च समानगुणक्रियादिषु प्रत्ययविशेषो न स्यात् तेन यदेषां निमित्तं सा दिगिति यच्चैतस्मादिदमिति पञ्चमी प्रयुज्यते अन्यथा

(१) परमर्षिभिः-पा॰ ६ पु॰ । (२) लोकव्यवहारार्थं-पा॰ ५ पु॰ ।
(३) संयोगास्तेषां लोकपाल-पा॰ ५ पु॰ । संयोगविभागा इति टीकासम्मतः ।
(४) ततो-पा॰ ५ पु॰ । (५) परिगृहीतत्वात्-पा॰ ६ पु॰ । परिग्रहवशात्-पा॰ ५ पु॰ ।
(६) तद्यथा-इत्यधिकम् ६ पु॰ । (७) यामी-पा॰ ५ पु॰ ।
(८) वायवी चान्द्रमसी-पा॰ ५ पु॰ ।

व्यान्तरमस्ति अतो द्वितन्तुककारणयोस्तन्त्वोराकाशसंयोगाभ्या[1]मेव तस्यो-
त्पत्तिः। बहुभ्यश्च तन्तुतुरीसंयोगेभ्य एकः पटतुरीसंयोगः[2]। पटकारणानां
तन्तूनां प्रत्येकं तुर्या सह संयोगः तेभ्यो बहुभ्य एकः पटतुर्याः संयोगो
जायते। पटारम्भकत्वं तु तन्तूनां खण्डावयविद्रव्यारम्भपरम्परया न च
मूर्तानां समानदेशतादोषः यावत्सु तन्तुष्वेकोऽवयवी वर्त्तते तावत्स्वेवान्यूना-
नतिरिक्तेषु परस्य समवायानभ्युपगमात् द्वितन्तुकं द्वयोस्तन्त्वोः समवैति त्रित-
न्तुकं तु तयोस्तन्त्वन्तरे चेत्युत्तरोत्तरेषु कल्पनायां[3] कुतः समानदेशत्वम्।
अत एव च पटे पाटिते तिष्ठति चाल्पतरतमादिभावभेदेन खण्डावयविग्रहणम्
तेषु विनष्टेषु तु यद्यारभ्यते पटो दुर्घटमिदम्। नन्वेवं बालशरीरावयवा अवि-
नष्टे एव तस्मिन्नाहारावयवसहिताः शरीरान्तरमारभेरन् आरभन्तां यदि पट
इव खण्डावयविनां वृद्धशरीरे तिष्ठति विनाशिते[4] वा पूर्वशरीराणामुपलम्भः
सम्भवति अथ नास्ति न तर्ह्ययं विधिर्यथादर्शनं व्यवस्थापनात्। एतेनार-
भ्यारम्भकवादपक्षे परमाणववस्थितस्य जगतो ग्रहणं न स्यादिति प्रत्युक्तम्। पर-
माणूनां त्र्यणुकादिकारणत्वभावस्य पृथिव्यधिकारे दर्शितत्वात्। अथवा यदि
परमाणवो द्व्यणुकमारभ्य तत्सहितास्त्र्यणुकमारभन्ते त्र्यणुकसहितास्तु द्रव्या-
न्तरं तथापि कुतो विश्वस्याग्रहणम् महत्त्वानेकद्रव्यवत्त्वरूपविशेषाणामुपल-
ब्धिकारणानां सम्भवात्। अथ सत्स्वपि तेष्वतीन्द्रियाश्रयत्वादतीन्द्रियत्वमेव
एवं द्व्यणुकारब्धस्य त्र्यणुकस्यातीन्द्रियत्वे तत्पूर्वकस्य विश्वस्यातीन्द्रियत्वं
त्वत्पक्षे दुर्निवारम्। तस्मान्नेयमचानुपपत्तिः परमाणूनां त्र्यणुकानारम्भकत्वे
पृथिव्यधिकारोक्तैव युक्तिरनुगन्तव्या[5]। एकस्माच्च संयोगाद् द्वयो[6]रुत्पत्तिः
कथमित्यनेन पृष्टः सन्नाह। यदेति[7]। पार्थिवाप्ययोः परमाण्वोः संयोगे सति
अन्येन पार्थिवेन परमाणुना पार्थिवस्य परमाणोरन्येनाप्येन चाप्यस्य परमाणोर्यु-
गपत्संयोगौ भवतः तदा ताभ्यां संयोगाभ्यां पार्थिवाप्ये द्व्यणुके युगपदारभ्येते।
समानजातीयसंयोगस्य द्रव्यान्तरोत्पत्तिहेतुत्वात्। ततो यस्मिन्नेव काले पार्थि-
वाप्यद्व्यणुकयोः कारणगुणपूर्वक्रमेण रूपाद्युत्पत्तिः तस्मिन्नेव काले इतरेतर-

(१) अकारणकाकाशसंयोगाभ्यां–पा० ३ पु०। (२) तुरिसंयोगः–पा० ४ पु०।
(३) उत्तरोत्तरकल्पनायां–पा० ३ पु०। (४) विशसिते–पा० २ पु०।
(५) रनुगन्तव्या–पा० ३ पु० (६) द्वयोः संयोगयोः–पा० ३ पु०।
(७) मूले पृ० १४० प० ७।

कारणाकारणगतात् संयोगादितरेतरकार्याकार्यगतो संयोगो युगपदुत्पद्येते । इतरेतरे पार्थिवाप्यद्व्यणुके तयोः कारणाकारणे परस्परसंयुक्तौ पार्थिवाप्यपरमाणू पार्थिवः परमाणुरितरस्य पार्थिवद्व्यणुकस्य कारणमितरस्याप्यस्य द्व्यणुकस्याकारणम् एवमाप्यपरमाणुरितरस्याप्यद्व्यणुकस्य कारणमितरस्य पार्थिवद्व्यणुकस्याकारणं तयोः संयोगात् इतरस्य पार्थिवपरमाणोर्यत्कार्यं पार्थिवं द्व्यणुकमकार्यश्चाप्यः परमाणुः तयोः संयोगो भवति एवमितरस्याप्यपरमाणोर्यत्कार्यमाप्यं द्व्यणुकमकार्यस्तु पार्थिवः परमाणुस्तयोरपि संयोगो भवतीत्येकस्माद् द्वयोरुत्पत्तिः । किं कारणम् । पार्थिवाप्ययोर्द्व्यणुकयोर्विजातीयपरमाणुसंयोगे किं प्रमाणमिति पृष्टः सन् प्रमाणमाह । कारणसंयोगिनेति । पार्थिवपरमाणुराप्यद्व्यणुकेन सह सम्बद्ध्यते तत्कारणसंयोगित्वात् पटसंयुक्ततुरीवत् । एवमाप्यं परमाणुमपि पक्षीकृत्य वक्तव्यम् । यतः कारणसंयोगिना कार्यं संयुज्यते अतः पार्थिवं द्व्यणुकं कारणसंयोगिनाप्येन परमाणुना सम्बन्ध्यते आप्यं च द्व्यणुकं तस्य कारणसंयोगिना पार्थिवपरमाणुनेत्युपसंहारः । अथ पार्थिवाप्यद्व्यणुकयोरितरेतरकारणाकारणसम्बद्धयोः कथं सम्बन्धः पार्थिवद्व्यणुकस्य स्वकीयाकारणेनाप्यद्व्यणुककारणेनाप्यपरमाणुना सम्बद्धस्याप्यद्व्यणुकस्यापि स्वकीयाकारणेन पार्थिवद्व्यणुककारणेन पार्थिवपरमाणुना सम्बद्धस्य कथं सम्बन्ध इति पृच्छति । उत्तरमाह । तयोरपीति । पार्थिवद्व्यणुकस्याप्येन परमाणुना यः संयोगजः संयोगो यश्चाप्यद्व्यणुकस्य पार्थिवपरमाणुना संयोगजः संयोगस्ताभ्यां पार्थिवाप्यपरमाणुसंयोगाभ्यां द्व्यणुकयोः परस्परसंयोगः । अत्रापि पूर्वोक्त एव न्यायः कारणसंयोगिना अकारणेन संयोगि कार्यमिति । त्रिविध एव संयोग इत्ययुक्तम् । नित्यस्यापि संयोगस्य सम्भवादिति केचित् । तत्प्रतिषेधार्थमाह । नास्त्यजः[1] संयोगः परिमण्डलवत् पृथगनभिधानात् । सर्वज्ञेन महर्षिणा सर्वार्थोपदेशाय प्रवृत्तेन पृथगनभिधानात् । अजः संयोगो नास्ति खपुष्पवत् । एतदेव विवृणोति । यथेत्यादिना[2] । संयोगोऽजो न भवतीति प्रतिज्ञार्थो न पुनरजः संयोगो नास्तीत्याश्रयासिद्धत्वात् । ननु परमाण्वाकाशयोः संयोगो नित्य एव तयोर्नित्यत्वादप्राप्त्यभावाच्च । यत्पुनरयं कणादेन नोक्तः तद् भ्रान्तेः पुरुषधर्मत्वात् अत आह । परमाणुभिराकाशादीनामिति[3] । यथा महतो न्यग्रो-

(१) नाप्यजः-पा० १ । २ पु० । (२) मूले पृ० १४० प० २० । (३) मूले पृ० १४१ प० ३ ।

धस्य(१) मूलाग्रावयवव्यापिन एकस्य मूलादग्रमग्राच्च मूलं गच्छता पुरुषेण संयोगविभागावन्यतरकर्मजौ युगपत्प्रतीयेते तथा व्यापिनोप्याकाशस्य परमाणुना सह संयोगविभागौ परमाणुकर्मजौ भवतस्तयोरव्याप्यवृत्तित्वादिति न परमाण्वाकाशसंयोगस्य नित्यता । इदं तावदित्थं परिहृतम् विभूनां परस्परतः संयोगे का प्रतिक्रिया(२) न ह्यसा(३)वन्यतरकर्मजः नाप्युभयकर्मजस्तेषां निष्क्रियत्वात् । नापि संयोगजः कार्यस्य हि कारणसंयोगिना अकारणेन संयोगजः संयोगो भवति । न चायं विभूनामुपपद्यते(४) नित्यत्वात् । अस्ति च तेषां संयोगः आकाशममूर्तेनापि द्रव्येण समं संयुज्यते मूर्तद्रव्यसंयोगित्वात् पटवदित्यनुमानात् प्रतीतः स चाकारणवन्नित्यं तस्मादनुपपन्नमिदम् अजः संयोगो नास्तीति तत्राह । विभूनामिति(५) । यत्र युतसिद्धिस्तत्रैव संयोगो दृष्टः युतसिद्धिश्चाकाशादिषु नास्ति अतो व्यापकाभावात् संयोगोपि तेषु नभवति । यच्च संयोगप्रतिपादकमनु मानमुक्तं तदसाधनम् उभयपक्षसमत्वात् यथेदं विभूनां संयोगं शास्ति(६) तथा ताभ्यामेव हेतुदृष्टान्ताभ्यां विभागमपि । अस्तु द्वयोरप्युपपत्तिः प्रमाणेन तथाभावप्रतीतेरिति चेन्न संयोगविभागयोरेकस्य नित्यत्वेन्यतरस्यासम्भवादिति द्वयोरप्यसिद्धिः परस्परप्रतिबन्धात् । अथ केयं युतसिद्धिर्यस्या अभावाद्विभूनां संयोगो न सिद्ध्यति अत्राह । सा पुनरिति(७) । द्वयोरन्यतरस्य वा पृथग्गमनं युतसिद्धिर्नित्यानां द्वयोरन्यतरस्य परस्परपरिहारेण पृथगाश्रयाश्रयित्वं युतसिद्धिरनित्यानाम् । इयं द्विधाप्याकाशादिषु नास्तीत्यभिप्रायः । विनाशस्तु सर्वस्य संयोगस्य एकार्थसमवेताद्विभागात् । अन्यतरकर्मजस्योभयकर्मजस्य संयोगजस्यैकार्थसमवेताद्विभागात् ययोर्द्रव्ययोः संयोगो वर्तते तयोः परस्परं विभागादस्य(८) विनाशः । यद्यपि विभागकाले संयोगो विद्यते एव तथापि तयोः सहभावो न लक्ष्यते विनाशस्याशुभावाद्विभागेन वा तदुपलम्भप्रतिबन्धात् । क्वचिदाश्रय(९)विनाशादपि संयोगस्य विनाशः कथं तन्त्वोः संयोगे सत्यन्यतरतन्त्वारम्भके अंशौ

---

(१) यथा हि न्यग्रोधस्य–पा॰ ३ पु॰ । (२) प्रक्रिया–इति साधुः ।
(३) न चासा–पा॰ ३ पु॰ । (४) मुत्पद्यते–पा॰ ३ पु॰ ।
(५) मूले पृ॰ १४१ प॰ ५ । (६) प्रशास्ति–पा॰ ३ पु॰ ।
(७) मूले पृ॰ १४१ प॰ ६ । (८) संयोगस्य विनाशः–पा॰ ३ पु॰ ।
(९) क्वचिच्चाश्रय–पा॰ २ पु॰ । मूले पृ॰ १४१ प॰ ८ ।

कर्मोत्पद्यते कुतश्चित्कारणात् तेन कर्मणा अंश्वन्तराद्विभागः क्रियते विभागादंश्वोः संयोगविनाशात् तन्तुविनाशे तदाश्रितस्य संयोगस्य विनाशः उभयाश्रयस्य तस्यैकाश्रयावस्थाने ऽनुपलम्भादिति ॥

विभागो विभक्तप्रत्ययनिमित्तम् । शब्दविभागहेतुश्च । प्राप्तिपूर्विकाऽप्राप्तिर्विभागः । स च त्रिविधः । अन्यतरकर्मज उभयकर्मजो विभागजश्च विभाग इति । तत्रान्यतरकर्मजोभयकर्मजौ(१) संयोगवत् । विभागजस्तु द्विविधः कारणविभागात्(२) कारणाकारणविभागाच्च । तत्र कारणविभागात् तावत् कार्याविष्टे कारणे कर्मोत्पन्नं यदा(३) तस्यावयवान्तराद्विभागं करोति न तदाकाशादिदेशात्(४) यदा त्वाकाशादिदेशाद्विभागं करोति न तदावयवान्तरादिति स्थितिः । अतोऽवयवकर्मावयवान्तरादेव विभागमारभते ततो विभागाच्च द्रव्यारम्भकसंयोगविनाशः तस्मिन् विनष्टे कारणाभावात् कार्याभाव इत्यवयविविनाशः तदा कारणयोर्वर्तमानो विभागः कार्यविनाशविशिष्टं कालं स्वतन्त्रं(५) वावयवमपेक्ष्य सक्रियस्यैवावयवस्य कार्यसंयुक्ता(६)-दाकाशादिदेशाद्विभागमारभते न निष्क्रियस्य कारणाभावादुत्तरसंयोगानुत्पत्तावनुपभोग्यत्वप्रसङ्गः न तु तदवयवकर्माकाशादिदेशाद्विभागं करोति(७) तदारम्भकालातीतत्वात्(८) प्रदेशान्तरसंयोगं तु करोत्येव अकृतसंयोगस्य कर्मणः कालात्ययाभावादिति । कार-

(१) अन्यतरकर्मज उभयकर्मजश्च-पा॰ ५ पु॰। (२) त्रियोगात्-पा॰ ६ पु॰ ।
(३) तस्य-इति नास्ति ५ पु॰ । (४) विभागं करोति-इत्यधिकं ५ पु॰ ।
(५) कालमपेक्ष्य स्वतन्त्रत्वात्-पा॰ ६ पु॰ । (६) अवयवकार्यसंयुक्ता-पा॰ ५ पु॰ ।
(७) विभागमारभते-पा॰ ५ पु॰ । (८) आरम्भकरूपकालातीतत्वात्-पा॰ ७ पु॰ ।

णाकारणविभागादपि कथम् । यदा हस्ते कर्मोत्पन्न-
मवयवान्तराद् विभागमकुर्वदाकाशादिदेशेभ्यो विभा-
गानारभ्य(१) प्रदेशान्तरे संयोगानारभते तदा ते
कारणाकारणविभागाः कर्म यां दिशं प्रति कार्यारम्भा-
भिमुखं तामपेक्ष्य कार्याकार्यविभागानारभन्ते तदन-
न्तरं कारणाकारणसंयोगाच्च(२) कार्याकार्यसंयोगानि-
ति । यदि कारणविभागानन्तरं कार्यविभागोत्पत्तिः
कारणसंयोगानन्तरं कार्यसंयोगोत्पत्तिः । नन्वेवमवय-
वावयविनोर्युतसिद्धिदोषप्रसङ्गः(३) इति । न । युत-
सिद्ध्यपरिज्ञानात् । सा पुनर्द्वयोरन्यतरस्य वा पृथ-
ग्गतिमत्त्वमियन्तु(४) नित्यानाम् अनित्यानां तु युते-
ष्वाश्रयेषु समवायो युतसिद्धिरिति । त्वगिन्द्रियशरीर-
योः पृथग्गतिमत्त्वं नास्ति युतेष्वाश्रयेषु समवायोस्ती-
ति परस्परेण संयोगः सिद्धः(५) । अथवाकाशयोस्त्वाश्र-
यान्तरा(६)भावेप्यन्यतरस्य पृथग्गतिमत्त्वात् संयोग-
विभागौ सिद्धौ । तन्तुपटयोरनित्ययोराश्रयान्तराभा-
वात्(७) परस्परतः संयोगविभागाभाव इति । दिगा-
दीनां तु पृथग्गतिमत्त्वाभावादिति(८) परस्परेण संयो-
गविभागाभाव इति । विनाशस्तु सर्वस्य विभागस्य क्ष-
णिकत्वाद् उत्तरसंयोगावधिसद्भावात् क्षणिकइति (९) ।
न तु संयोगवद्द्वयोरेव विभागस्तयोरेव संयोगा-

---

(१) आकाशादिदेशाद्विभागमारभ्य–पा॰ ५ पु॰ । (२) संयोगाश्च–पा॰ ७ पु॰ ।
(३) युतसिद्धिप्रसङ्गः–पा॰ ५ पु॰ । (४) इतीयं युतसिद्धिः–पा॰ ५ । ६ पु॰ ।
(५) संयोगसिद्धिः–पा॰ ५ युतसिद्धिः ६ पु॰ । (६) अथवाकाशयोराश्रया–पा॰ ५ पु॰ ।
(७) पृथगाश्रयान्तराभावात्–पा॰ ५ पु॰ । (८) गतिमत्त्वं नास्तीति–पा॰ ५ पु॰ ।
(९) क्षणिकत्वादुत्तरसंयोगावधिसद्भावात्–पा॰ ६ । ७ पु॰ ।

द्विनाशो भवति कस्मात् संयुक्तप्रत्ययवद्विभक्तप्रत्ययानुवृत्त्यभावात् तस्मादुत्तरसंयोगावधिसद्भावात् क्षणिक इति। क्वचिच्चाश्रयविनाशादेव विनश्यतीति(१) । कथम् । यदा द्वितन्तुककारणावयवे अंशौ(२) कर्मोत्पन्नमंशवन्तराद्विभागमारभते तदैव तन्त्वन्तरेपि कर्मोत्पद्यते विभागाच्च तन्त्वारम्भकसंयोगविनाशः तन्तुकर्मणा(३) तन्त्वन्तराद्विभागः क्रियते इत्येकः कालः। ततो यस्मिन्नेव काले विभागात् तन्तुसंयोगविनाशः(४) तस्मिन्नेव काले संयोगविनाशात् तन्तुविनाशस्तस्मिन् विनष्टे तदाश्रितस्य तन्त्वन्तरविभागस्य विनाश इति। एवं तर्ह्युत्तरविभागानुत्पत्तिप्रसङ्गः। कारणविभागाभावात्। ततः प्रदेशान्तरसंयोगवति(५) संयोगाभाव इत्यतो विरोधिगुणासम्भवात्(६) कर्मणश्चिरकालावस्थायित्वं नित्यद्रव्यसमवेतस्य च नित्यत्वमिति दोषः। कथम्। यदाप्यद्व्यणुकारम्भकपरमाणौ कर्मोत्पन्नमण्वन्तराद्विभागं करोति तदैवाण्वन्तरेपि कर्म(७) ततो यस्मिन्नेव काले विभागाद् द्रव्यारम्भकसंयोगविनाशः(८) तदैवाण्वन्तरकर्मणा द्व्यणुकारवोर्विभागः क्रियते ततो यस्मिन्नेव काले विभागात् द्व्यणुकाणुसंयोगस्य विनाशः तस्मिन्नेव काले संयोगविनाशात् द्व्यणुकस्य विनाशः

---

(१) आश्रयविनाशाद्विनश्यति–पा॰ ५ पु। (२) अवयवांशौ–पा॰ ५ पु॰।
(३) तन्त्वन्तरकर्मणा च–पा॰ ५ पु॰। (४) तन्त्वन्तरसंयोगविनाशः–पा॰ ५ पु॰।
(५) संयोगवति इति नास्ति ७ पु॰।
(६) विरुद्धगुणान्तराभावात्–पा ५ पु॰। विरोधिगुणानामसम्भवात्–पा॰ ६ पु॰।
(७) कर्मोत्पद्यते–पा॰ ५ पु॰। (८) द्व्यणुकद्रव्यारम्भकसंयोगनाशः–पा॰ ६ पु॰।

**तस्मिन् विनष्टे तदाश्रितस्य द्व्यणुकाणुविभागस्य[१] विनाशः ततश्च[२] विरोधिगुणासम्भवान्नित्यद्रव्यसमवेतकर्मणो नित्यत्वमिति । तन्त्वंश्वन्तरविभागाद्विभाग इत्यदोषः । आश्रयविनाशात्तन्त्वोरेव विभागो विनष्टो न तन्त्वंश्वन्तरविभाग इति एतस्मादुत्तरो विभागो जायते[३] अङ्गुल्याकाशविभागाच्छरीराकाशविभागवत् तस्मिन्नेव काले कर्म[४] संयोगं कृत्वा विनश्यतीत्यदोषः । अथवा अंश्वन्तरविभागोत्पत्तिसमकालं तस्मिन्नेव तन्तौ कर्मोत्पद्यते ततोंश्वन्तरविभागात् तन्त्वारम्भकसंयोगविनाशः तन्तुकर्मणा च तन्त्वन्तराद्विभागः क्रियते इत्येकः कालः । ततः संयोगविनाशात् तन्तुविनाशः तद्विनाशाच्च तदाश्रितयोर्विभागकर्मणोर्युगपद्विनाशः[५] । तन्तुवीरणयोर्वा संयोगे सति द्रव्यानुत्पत्तौ[६] पूर्वोक्तेन विधानेना[७]श्रयविनाशसंयोगाभ्यां तन्तुवीरणविभागविनाश[८] इति ॥**

संयोगपूर्वकत्वाद्विभागस्य तदनन्तरं निरूपणार्थमाह । विभागो विभक्तप्रत्ययनिमित्तमिति । अत्रापि व्याख्यानं पूर्ववत् । संयोगाभावे विभक्तप्रत्यय[९] इति चेत् असति विभागे संयोगाभावस्य कस्मादुत्पादः कर्मणा क्रियते इति चेन्न कर्मणो गुणविनाशे सामर्थ्यादर्शनात् । दृष्टं च गुणविनाशे गुणानां हेतुत्वम् तेनाचापि गुणान्तरकल्पना । किं च संयोगाभावे ऽसंयुक्ताविमाविति प्रत्ययः स्यान्न[१०] विभक्ताविति अभावस्य विधिमुखेन ग्रहणाभावात् ।

---

(१) त्रिभागस्य-पा॰ १ पु॰ । (२) तस्मात्-पा॰ ५ पु॰ ।
(३) उत्तरोत्तरो विभागः सञ्जायते-पा॰ ६ पु॰ ।
(४) शरीराकाशविभागवदिति ततस्तस्मिन्नुत्पन्ने विभागे कर्म-पा॰ ५ पु॰ ।
(५) विनाश इति-पा॰ १ पु॰ । (६) द्रव्यानुत्पत्तौ-नास्ति १ पु॰ ।
(७) क्रमेण-पा॰ १ पु॰ । (८) तन्तुवीरणयोर्विभागस्य नाश इति-पा॰ ५ पु॰ ।
(९) विभागव्यवहार-पा॰ ३ पु॰ । (१०) न तु-पा॰ ३ पु॰ ।

भाक्तः प्रत्ययोयमिति चेत् तर्हि विभागस्याप्रत्याख्यानं निष्प्रधानस्य भाक्तस्याभावात् । तस्य कार्यं दर्शयति । शब्दविभागहेतुश्चेति । न केवलं विभक्तप्रत्ययनिमित्तं शब्दविभागहेतुश्चेति चार्थः । वंशदले पाट्यमाने योयमाद्यः शब्दः स तावद्गुणान्तरनिमित्तः शब्दत्वात् भेरीदण्डसंयोगजशब्दवत् । न चायं संयोगजस्तस्याभावात् तस्माद्वंशदलविभागज एवायं तद्भावभावित्वात् । विभागस्य विभागहेतुत्वं चानन्तरं वक्ष्यामः । प्राप्तिपूर्विकाऽप्राप्तिरिति तस्य लक्षणकथनम् । अधर्म इति नञ् यथा धर्मविरोधिनि गुणान्तरे न तु धर्माभावे तथा ऽप्राप्तिरिति नञ् प्राप्तिविरोधिनि(१) गुणान्तरे न तु प्राप्तेरभावे प्राप्तेः पूर्वस्थितायां या ऽप्राप्तिः प्राप्तिविरोधी गुणविशेषः स विभाग इति वाक्यार्थः । किं प्राप्तेः पूर्वावस्थानमात्रं किं वा विभागं प्रति हेतुत्वमप्यस्ति । अवस्थितिमात्रमिति ब्रूमहे । संयोगस्य विभागहेतुत्वे ऽवयवसंयोगानन्तरमेव तद्विभागस्योत्पत्तौ द्रव्यानुत्पत्तिप्रसङ्गात् । कर्मसहकारी संयोगः कारणमिति चेत् अन्वयव्यतिरेकावधृतसामर्थ्यं कर्मैव कारणमस्तु न संयोगस्तस्मिन् सत्यप्यभावात् प्रध्वंसोत्पत्ताविव भावस्य विभागोत्पत्तौ संयोगस्य पूर्वकालतानियमो विभागस्य तद्विरोधिस्वभावत्वात् । स च त्रिविध इति भेदकथनम् । अत्रापि चशब्दोऽवधारणे त्रिविध एव । अन्यतरकर्मज उभयकर्मजो विभागजश्च विभाग इति(२) । तत्र तेषुमध्ये ऽन्यतरकर्मजोभयकर्मजौ संयोगवत् यथा क्रियावता निष्क्रियस्य संयोगोऽन्यतरकर्मजस्तथा विभागोपि यथोभयकर्मजः संयोगो मल्लयोर्मेषयोर्वा तथा विभागोपि । विभागजस्तु द्विविध इति तुशब्देनास्य पूर्वाभ्यां विशेषकथनम् । कारणयोर्विभागादेको विभागो भवति अपरस्तु कारणाकारणयोर्विभागादिति द्वैविध्यम् । कारणविभागाच्च विभागः कथ्यते । कार्याविष्ट इत्यादिना । कार्येणाविष्टे व्याप्ते अवरुद्धे कारणे कर्मोत्पन्नं यदा तस्यावयवस्यावयवान्तराद् द्रव्यारम्भकसंयोगविनाशकं विभागं करोति न तदा द्रव्यावरुद्धादाकाशादिदेशाद्विभागं करोति यदा चाकाशादिदेशात् न तदावयवान्तरादिति स्थितिनियमः । अतोऽवयवकर्मावयवान्तरादेव विभागमारभते यत आकाशविभागकारणं कर्म अवयवान्तराद्विभागं न करोतीति नियमः अतोवयवान्तरविभागारम्भकं कर्म

---

(१) अप्राप्तिरिति न प्राप्तिः प्राप्तिविरोधिनि-पा० १ पु० । (२) मूले पृ० १५१ प० ७ ।

अवयवान्तरादेव विभागं करोति नाकाशादिदेशात् । अयमभिसन्धिः । आका-
शविभागकर्तृत्वं कर्मणो द्रव्यारम्भकसंयोगविरोधिविभागानारम्भकत्वेन व्याप्तं
द्रव्यारम्भकसंयोगविरोधिविभागानारम्भकत्वविरुद्धं च द्रव्यारम्भकसंयोगवि-
रोधिविभागोत्पादकत्वमतो यचेदमुपलभ्यते तच द्रव्यारम्भकसंयोगविरोधिवि-
भागानुत्पादकत्वे निवर्तमाने तद्व्याप्तमाकाशविभागकर्तृत्वमपि निवर्तते । यथा
वह्निव्यावृत्तौ धूमव्यावृत्तिः । आकाशविभागकर्तृत्वस्य द्रव्यारम्भकसंयोगविरो-
धिविभागानारम्भकत्वस्य च सहभावमात्रं न व्याप्तिरिति चेत् न व्यभिचा-
रानुपलब्धेः । ययोः क्वचिद्व्यभिचारो दृश्यते तयोः सहभावमात्रम् यथा वज्रे
पार्थिवत्वलोहलेख्यत्वयोः सत्यपि पार्थिवत्वे काष्ठादिषु लोहलेख्यत्वात् न
तु व्योमविभागकर्तृत्वस्य विशिष्टविभागानुत्पादकत्वस्य च व्यभिचारो दृश्यते
अदृश्यमानोऽपि कदाचिदयं भविष्यतीत्याशङ्क्येत यद्यनयोः शिष्याचार्ययोरिवो-
पाधिकृतः सहभावः प्रतीयेत । न चैवमप्यस्ति उपाधीनामनुपलम्भात् यद्य-
प्रतीतव्यभिचारो निरुपाधिकः सहभावो न व्याप्तिहेतुरित्यग्निधूमयोरपि व्याप्ति-
र्नस्यादित्युच्छिन्नेदानीं जगत्यनुमानवार्ता । यद्यवयवकर्मणावयवान्तराद् वि-
भागः क्रियते नाकाशादिदेशात् ततः किं सिद्धम् तचाह । विभागाच्च द्रव्यारम्भ-
कसंयोगविनाशः । आकाशविभागकर्तृत्वे विशिष्टविभागानुत्पादाद् द्रव्यारम्भ-
कसंयोगविनाशो न भवेदित्यर्थः । संयोगविनाशे किं स्यादत आह । तस्मि-
न्निति । संयोगे ऽसमवायिकारणे तस्मिन्नष्टे कारणस्याभावात् कार्याभाव इति
न्यायादवयविनो विनाशः अवयविद्रव्ये नष्टे किं स्यादत आह । तदेति ।
द्रव्ये विनष्टे तत्कारणयोरवयवयोर्वर्तमानो विभागः कार्यविनाशेन विशिष्टं
कालं स्वतन्त्रं वा अवयवमपेक्ष्य सक्रियस्यैवावयवस्य कार्यसंयुक्तादाकाशादि-
देशाद् विभागमारभते । यावत् कार्यद्रव्यं न विनश्यति तावदवयवस्य स्वात-
न्त्र्यं पृथग्देशगमने योग्यता नास्तीत्यवयवदेशाद् विभागो न घटते तदर्थ-
मुक्तं कार्यविनाशविशिष्टं कालं स्वतन्त्र्यं वावयवमपेक्षते । कारणयोर्वर्तमानो
विभागः सक्रियस्यैव विभागं करोतीत्यत्र को हेतुरिति चेत् अत आह ।
न निष्क्रियस्य कारणाभावादिति । विभागात् विभागोत्पत्तौ कर्मापि निमित्तका-
रणम् । तस्याभावान्न निष्क्रियस्य विभागो ऽचैवार्थे युक्त्यन्तरमाह । उत्तरसंयोगा-
नुत्पत्तावनुपभोग्यत्वप्रसङ्ग इति । क्रिया हि प्राधान्येन उत्तरसंयोगार्थमुपजाता

देशान्तरप्राप्तेन द्रव्येण कस्यचित् पुरुषार्थस्य सम्पादनात् तच यदि सक्रियस्यावयवस्य कार्यसंयुक्तादाकाशादिदेशाद्विभागो न भवति तथा पूर्वसंयोगस्य प्रतिबन्धकस्यानिवृत्तेरुत्तरसंयोगानुपपत्तौ सानुपभोग्या निःप्रयोजना स्यात् । न चैतद्युक्तम् । तस्मात् सक्रियस्यैव विभाग इत्यर्थः(१) । अवयवक्रिययोः अवयवविभागसमकालमाकाशादिविभागकर्तृत्वं नोपपद्यत इति । माकार्षीदियं युगपद्विभागद्वयं क्रमकरणे तु को विरोधो येन विभागजनने दृष्टसामर्थ्यामिमां परित्यज्यादृष्टसामर्थ्यस्य विभागस्य विभागहेतुत्वमाश्रीयत इत्यचाह । न तु तदवयवकर्माकाशादिदेशाद् विभागं करोतीति तदारम्भककालातीतत्वात् । एष हि कर्मणः स्वभावो यत् तदसमवायिकारणतया विभागमारभमाणं स्वोत्पत्त्यनन्तरक्षण एवारभते न क्षणान्तरे स च तस्य विभागारम्भककालो द्वितीयभागोत्पत्तिकाले ऽतीत इति न तस्मादस्योत्पत्तिः । नन्वेवमुत्तरसंयोगमपि कुतः करोति अनेकक्षणव्यवधानात् अत आह । प्रदेशान्तरसंयोगं करोतीति (२) । यथा कर्मणः स्वोत्पादानन्तरक्षणो विभागारम्भकालस्तथा पूर्वसंयोगनिवृत्त्यनन्तरक्षणः प्रदेशान्तरसंयोगारम्भकालः पूर्वदेशावस्थितस्य द्रव्यस्य देशान्तरप्राप्तेरसम्भवात् तस्य च संयोगारम्भकालस्यात्ययो ऽतिक्रमो न भूतस्तदानीं हि कालोयमतिक्रान्तः स्याद्यदि कर्मणा प्रदेशान्तरसंयोगः कृतो भवेन्न त्वेवं तस्मादकृतसंयोगस्य कर्मणो यः संयोगारम्भकालस्तस्यात्ययाभावात् कर्म संयोगं करोति न विभागं तेन चेदयं न कृतो ऽन्यस्यासम्भवादसमवायिकारणेन विना च वस्तुनो ऽनुत्पादादेकार्थसमवेतो विभागोस्य कारणमित्यवतिष्ठते । इतिशब्दः प्रक्रमसमाप्तौ । एवं कारणविभागपूर्वकं विभागं प्रतीत्य कारणाकारणविभागपूर्वकं विभागं प्रत्येतुमिच्छन् पृच्छति कारणाकारणविभागादपि कथमिति । उत्तरमाह । यदेत्यादिना । हस्ते कुतश्चित् कारणात् कर्मोत्पन्नं तस्य हस्तस्यावयवान्तराद्विभागमकुर्वदाकाशादिदेशेभ्यो विभागानारभ्य प्रदेशान्तरैः सह यदा संयोगानारभते तदा ते कारणाकारणविभागाः शरीरकारणस्य हस्तस्याकारणानामाकाशादिदेशानां विभागाः कर्म च यस्यां दिशि कार्यारम्भाभिमुखं कर्मणा यचोत्तरसंयोगो जनयितव्यः तां दिशमपेक्ष्य कार्याकार्यविभागान् हस्तकार्यस्य शरीर-

(१) इति तात्पर्यम्-इति क्वचिदिति सूचितम् ३ पु० । (२) मूले पृ० १५१ प० २१ ।

स्याकार्याणामाकाशादिदेशानां विभागानारभन्ते। यत: कुड्यादिदेशाद्धस्तस्य विभाग: तत: शरीरस्यापि विभागो दृश्यते न चायं शरीरक्रियाकार्य: तदानीं शरीरस्य निष्क्रियत्वात् नापि हस्तक्रियाकार्यो भवितुमर्हति व्यधिकरणस्य कर्मणो विभागहेतुत्वादर्शनात्(१)। अत: कारणाकारणविभागस्तस्य कारणमिति कल्प्यते। आकाशादीत्यादिपदं समस्तविभुद्रव्यावरोधार्थम्(२)। अत एव विभागानिति बहुवचनं तद्विभागानां बहुत्वात्। अत्राहुरेके। कुड्यादिदेशाद्धस्तशरीरविभागयोर्युगपद्भावप्रतीते: तयो: कार्यकारणभावाभिधानं प्रत्यक्षविरुद्धमिति। तदसङ्गतम्। हस्तविभागकाले शरीरविभागोत्पत्तिकारणाभावात्। न चासति कारणे कार्योत्पत्तिरस्ति हस्तक्रिया च न कारणमित्युक्तम् तस्मात्तयोर्युगपदभिमानो भ्रान्त:। अनुमानगम्य: क्रमभाव: प्रत्यक्षसिद्धं च यौगपद्यं प्रत्यक्षे च परिपन्थिन्यनुमानस्योत्पत्तिरेव नास्ति अबाधितविषयत्वाभावात् कथं तदनुरोधात् (३) प्रत्यक्षस्य भ्रान्तत्वमिति चेत् उत्पलपत्त्रशतव्यतिभेदेऽपि कुतोऽनुमानप्रवृत्ति: प्रत्यक्षविरोधात्। अथ मन्यसे तत्र प्रत्यक्षविरोधादनुमानं नोदेति यद्यनेन(४) विषयस्य बाधो निश्चित: स्यादिह त्वसौ सन्दिग्ध: पत्त्रशतव्यतिभेदस्याशुभावित्वेनापि निमित्तेन यौगपद्यग्राहकस्य प्रत्यक्षस्य प्रवृत्ते: सम्भवात्। अस्ति च सर्वलोकप्रसिद्धम् अतिदृढमव्यवहिता सूची भिनत्ति न व्यवहितेति व्याप्तिग्राहकं प्रमाणम् अतस्तत्सामर्थ्यात् प्रत्यक्षे संभवत्यपि भवत्यनुमानस्योदय इति। एवं चेदत्र व्यधिकरणा क्रिया विभागं न करोतीति व्याप्तिग्राहकस्य प्रमाणस्यातिदृढत्वात् प्रत्यक्षस्य चान्यथाप्युपपत्ते: सुस्थितं क्रमानुमानम्। अत एव चानेन(५) प्रत्यक्षस्य बाध: इदं हि सविषयं निर्विषयं च प्रत्यक्षमाशुभावित्वमात्रेण प्रवृत्ते: यच्च सविषयं तत्तथात्वेनावस्थितस्य विषयस्य साहाय्यप्राप्त्या सबलं(६) दुर्बलं च निर्विषयमसहायत्वात् व्याप्तिग्राहकेणैव प्रत्यक्षेण बाधो यदनुमानेन(७) प्रत्यक्षस्य बाध:। तथा च दिङ्मोहादिष्वनुमानमेव बलवदिति मन्यन्ते वृद्धा: भवति वै प्रत्यक्षादप्यनुमानं बलीय इति वदन्त:। वह्न्युष्णत्वग्राहिण: प्रत्यक्षस्य तु नान्यथोपपत्तिरस्तीति तेनावधारिते विषयस्य

(१) विभागे हेतुत्वादर्शनात्-पा० ३ पु०। (२) द्रव्यावबोधार्थम्।
(३) कथं तदनुमानविरोधात्-पा० ३ पु०। (४) प्रत्यक्षेण।
(५) एवानुमानेन-पा० ३ पु०। (६) बलवत्-पा० ३ पु०।
(७) तद्बाधोदयादनुमानेन-पा० ३ पु०।

बाधे नास्त्यनुमानस्य प्रवृत्तिः किमर्थं पुनर्ज्ञानयोर्बाध्यबाधकभावः कल्प्यते समाने विषये तयोर्विरोधात् । एकमेव तद्वस्तु किञ्चिद्रजतमित्येवं बोधयति शुक्तिकेयमिति चापरं शुक्तिकात्वरजतत्वयोश्च नैकत्र संभवः सर्वदा तयोः परस्परपरिहारेणावस्थानोपलम्भात् । अतो विषयविरोधात् तद्विज्ञानयोरपि विरोधे सति बाध्यबाधकभावकल्पनं को बाधः विषयापहारः । ननु रजतज्ञानावभासितो धर्मी तावदुत्पन्नेऽपि ज्ञानान्तरे तदवस्थ एव प्रतिभाति रजतत्वं नास्त्येव किमपह्रियते सम्बन्धवियोजनस्यापहारार्थत्वात् । विज्ञाने प्रतिभातं तदिति चेत् सत्यं प्रतिभातं न तु प्रतिभानं शक्यापहारं भूतत्वादेव नहि प्रतिभासितोऽर्थोऽप्रतिभासितो भवति वस्तुवृत्त्या रजतमविद्यमानमपि ज्ञानेन तत्र विद्यमानवदुपदर्शितम् तस्य ज्ञानप्रसञ्जितस्य साक्षाद्विरोधिप्रतिपादनमेव (१)वियोजनमिति चेद्रजताभावे प्रतिपादिते रजतज्ञानस्य का क्षतिरभूत् न ह्यस्य रजतस्थितिकरणे व्यापारोऽपि त्वस्य प्रकाशने तच्चानेन जायमानेन कृतमिति पर्यवसितमिदं किं बाध्यते रजताभावप्रतीतौ पूर्वोपजातस्य रजतज्ञानस्य अयथार्थतास्वरूपं प्रतीयते इत्येषा क्षतिरभूत् । नन्वेवं फलापहार एव बाधः अयथार्थतावगमे सति ज्ञानस्य व्यवहारानङ्गत्वात् । मैवम् । फलापहारस्य विषयापहारनान्तरीयकत्वात् न तावज्ज्ञानस्य सर्वत्र फलनिष्ठता तस्य पुरुषेच्छाधीनस्यानुपजननेऽप्युपेक्षासंवित्तेः पर्यवसानात् । यत्रापि फलार्थिता तत्रापि फलस्य विषयप्रतिबद्धत्वाद्विषयस्य ज्ञानप्रतिबद्धत्वाद्विषयापहार एव ज्ञानस्य बाधो न फलापहारः तस्य विषयापहारनान्तरीयकत्वादिति कृतं ग्रन्थविस्तरेण संग्रहटीकायाम् । विभागजविभागानन्तरभावित्वात् पूर्वं प्रतिज्ञातं (२) चिरोत्पन्नस्य च संयोगजसंयोगं प्रतिपादयति । तदनन्तरमिति (३)। तस्माद्विभागजविभागादनन्तरं शरीरकारणस्य हस्तस्याकारणानामाकाशादिदेशानां संयोगात् कर्मजात् हस्तकार्यस्य शरीरस्य निष्क्रियस्याकार्याणामाकाशादिदेशानां संयोगानारभन्ते न हस्तक्रिया तस्याः स्वाश्रयस्य देशान्तरप्राप्तिहेतुत्वात् । इतिशब्दः प्रक्रमसमाप्तौ । अत्र चोदयति । यदीति । कारणस्य हस्तस्य विभागानन्तरं यदि कार्यस्य शरीरस्य विभागस्तथा कारणस्य संयोगा-

---

(१) विरोधिप्रतिपादनद्वारेण चाभावप्रतिपादनमेव-पा० ३ पु० । (२) संयोगलक्षणे ।
(३) मूले पृ० १५२ प० ५ ।

नन्तरं कार्यस्य संयोगो न तत्समकालम् । नन्वेवं सत्यवयवावयविनोर्युतसिद्धिः पृथक्सिद्धिः परस्परस्वातन्त्र्यं स्यात् । एतदुक्तम्भवति(१) । यदि हस्ताश्रितं शरीरं तदा हस्ते गच्छति तदपि सहैव गच्छेत् तथा सति च संयोगविभागक्रमो न स्यात् क्रमेण चेदनयोः संयोगविभागौ न तदा हस्तगमने शरीरस्य गमनमिति तस्य स्वातन्त्र्यप्रसक्तिः । परिहरति । नेति । युतसिद्धिप्रसङ्ग इति न कुतो युतसिद्धेरपरिज्ञानात् । यादृशं युतसिद्धेर्लक्षणं तादृशं त्वया न ज्ञातमित्यर्थः । कीदृशं तस्या लक्षणं तत्राह । सा पुनर्द्वयोरिति (२) । द्वयोरेकस्य वा परस्परसंयोगविभागहेतुभूतकर्मसमवाययोग्यता युतसिद्धिः । द्वयोः परमाण्वोः पृथग्गमनमाकाशपरमाण्वोश्चान्यतरस्य पृथग्गमनमियं तु नित्यानाम् । तुशब्दोऽवधारणे । नित्यानामित्यस्मात्परो द्रष्टव्यो नित्यानामेवेयं युतसिद्धिरित्यर्थः । अनित्यानां तु युतेष्वाश्रयेषु(३) समवायो युतसिद्धिः । द्वयोरन्यतरस्य वा परस्परपरिहारेणान्यचाश्रये समवायो युतसिद्धिरनित्यानां द्वयोः पृथगाश्रयाश्रयित्वं समवायः शकुन्याकाशयोश्चान्यतरस्य शकुनेः पृथगाश्रयाश्रयित्वम् । यद्यप्यन्यतरस्य पृथग्गमनमप्यस्ति तथापि तस्य पृथग्गमनस्य ग्रहणं तस्य नित्यविषयत्वेन व्याख्यानात् । अनित्यानामपि पृथग्गमनमेव युतसिद्धिः किं नोच्यते तदाह । त्वगिन्द्रियशरीरयोः पृथग्गमनं नास्ति युतेष्वाश्रयेषु समवायोस्तीति परस्परेण संयोगः सिद्धः । यदि त्वनित्यानामपि पृथग्गमनं युतसिद्धिरुच्यते त्वगिन्द्रियशरीरयोः पृथग्गमनाभावादयुतसिद्धता स्यात् ततश्चैतयोः परस्परसंयोगो न प्राप्नोति तस्य युतसिद्धैव व्याप्तत्वात् तस्मादनित्यानां न पृथग्गमनं युतसिद्धिरित्यर्थः । आश्रयाभावादेव पृथगाश्रयाश्रयित्वं नित्येषु नास्ति तेषां च पृथग्गतिमत्त्वात् परस्परसंयोगविभागौ सिद्धौ तेनैषां पृथग्गमनमेव युतसिद्धिरित्यभिप्रायेणाह । अथवाकाशयोस्त्वाश्रयान्तराभावेप्यन्यतरस्य पृथग्गतिमत्त्वात् संयोगविभागौ सिद्धाविति । पूर्वमसत्यपि पृथग्गतिमत्त्वे त्वगिन्द्रियशरीरयोः पृथगाश्रयाश्रयित्वे सति संयोगसंभवादनित्यानां पृथगाश्रयाश्रयित्वं युतसिद्धिर्न पृथग्गमनमित्युक्तम् । सम्प्रत्येनमेवार्थं समर्थयितुं तन्तुपटयोरन्यतरस्य पृथग्गतिमत्त्वासंभवेपि पृथगाश्रयत्वाभावात् संयोगविभागाभावं दर्शयति । तन्तुपटयोरित्यादिना । विभूनां तु द्वयोरन्यतरस्य वा पृथग्गमनाभा-

---

(१) एतदुक्तं स्यात् पा॰ १ पु॰ । (२) मूले पृ॰ १५२ प॰ १० । (३) आश्रितेषु-पा॰ १ पु॰ ।

वान्न परस्परेण संयोगो नापि विभागः तस्य संयोगपूर्वकत्वात् किं तु स्वरूपस्थितिमात्रमित्याह । दिगादीनामिति । एतावता सन्दर्भेणैतदुपपादितम् । हस्ते गच्छति शरीरं न गच्छतीति एतावता न युतसिद्धिः यदि तु हस्तशरीरयोः पृथगाश्रयाश्रयित्वं स्यात् तदा भवेदनयोर्युतसिद्धता तत्तु नास्ति शरीरस्य हस्ते समवेतत्वात् । विनाशस्तु सर्वस्य विभागस्य चणिकत्वात् । कर्मजस्य विभागजस्य च कारणवृत्तेः कारणाकारणवृत्तेश्च ([1]) विभागस्य सर्वस्य चणिकत्वमाशुतरविनाशित्वं कुतः सिद्धमित्यचाह([2]) । उत्तरसंयोगावधिसद्भावादिति ([3]) । उत्तरसंयोगोऽवधिः सीमा तस्य सद्भावात् चणिको विभागः । किमुक्तं स्यान्न विभागो निरवधिः किं त्वस्योत्तरसंयोगोऽवधिरस्ति उत्तरसंयोगश्चानन्तरमेव जायते तस्मादाशुविनाश्युत्तरसंयोगो विभागस्यावधिरित्येतदेव कुतस्तत्राह । न तु ([4]) संयोगवदिति । यथा संयोगः स्वाश्रययोरेव परस्परविभागाद्विनश्यति नैवं विभागः स्वाश्रययोरेव परस्परसंयोगाद्विनश्यति किं तु स्वाश्रयस्यान्येनापि संयोगात् । तथाहि वृक्षस्य मूले पुरुषेण विभागस्तयोः परस्परसंयोगाद्विनश्यति पुरुषस्य प्रदेशान्तरसंयोगाद्वा । एवं चेत्सिद्धमुत्तरसंयोगावधित्वं विभागस्य तदारम्भकस्य कर्मणः स्वाश्रयस्य देशान्तरप्राप्तिमकृत्वा पर्यवसानाभावात् । नन्वेतदपि साध्यसमं संयोगमात्रेण विभागनिवृत्तिरिति तत्राह । संयुक्तप्रत्ययवदिति । यथा संयुक्तप्रत्ययश्चिरमनुवर्तते नैवं स्वाश्रयस्य देशान्तरसंयोगे भूते विभक्तप्रत्ययानुवृत्तिरस्ति अतस्तस्य संयोगमात्रेणैव निवृत्तिः । उपसंहरति । तस्मादिति । क्वचिदाश्रय([5])विनाशादपि विनाशः । कथमित्यन्यस्य प्रश्नः ([6]) । उत्तरम् । यदेति ([7]) । द्वितन्तुककारणस्य तन्तोरवयवे अंशौ कर्मोत्पन्नमंश्वन्तरस्यांशोर्विभागमारभते यदा तदैव तन्त्वन्तरेऽपि कर्म विभागाच्चांशोयस्तन्त्वारम्भकसंयोगविनाशो यदा तदा तन्तुकर्मणा तन्त्वन्तराद्विभागः क्रियते इत्येकः कालः । ततो यस्मिन् काले विभागात् तन्त्वोः संयोगविनाशः । यस्मिन्नेव काले विभागात् तन्त्वोः संयोगविनाशः तस्मिन्नेव कालेंऽश्वोः संयोगविनाशात् तदारब्धस्य तन्तोर्विनाशः तस्मिंस्तन्तौ विनष्टे तदाश्रितस्य तन्त्व-

---

(१) कर्मजस्य विभागस्य कारणवृत्तेः कारणाकारणवृत्तेश्च विभागजस्य–पा॰ ३ पु॰ ।
(२) इत्यत आह–पा॰ २ पु॰ । (३) मूले पृ॰ १५२ प॰ २० । (४) न च–पा॰ २ पु॰ ।
(५) क्वचिच्चाश्रय–पा॰ ३ पु॰ । (६) परिप्रश्नः पा॰ १ पु॰ । (७) मूले पृ॰ १५३ प॰ ४ ।

न्तरविभागस्य विनाशः तदाऽऽश्रयविनाशः कारणमन्यस्य विनाशहेतोरभावात् । अत्र पुनः प्रत्यवतिष्ठते । एवं तर्हीति ([1]) । द्वितन्तुकविनाशसमकालमेव तन्तुविभागस्य विनाशः उत्तरो विभागः सक्रियस्य तन्तोराकाशादिदेशेन समं विभागजविभागेनोत्पद्यते कारणस्य तन्त्वोर्विभागस्याभावात् । यद्युत्तरो विभागो न संवृत्तः ततः किं तत्राह । तत इति । तत उत्तरविभागानुत्पादात् प्राक्तनस्य तन्त्वाकाशसंयोगस्य प्रतिबन्धकस्यानिवृत्तेः ([2]) प्रदेशान्तरेण सह संयोगो न भवति अतः कारणाद्विरोधिनो गुणस्योत्तरसंयोगस्याभावात् कर्मणः कालान्तरावस्थायित्वं स्यात् यावदाश्रयविनाशो विनाशहेतुर्नोपनिपतति नित्यद्रव्यसमवेतस्य नित्यत्वमिति दोषः । कथमिति प्रश्नः । उत्तरमाह यदेति । आप्यद्व्यणुकस्यारम्भके परमाणौ कर्मोत्पन्नमण्वन्तराद्विभागं करोति यदा तदैव द्व्यणुकसंयोगिन्यनारम्भकपरमाण्वन्तरेऽपि कर्म । ततो यस्मिन्नेव काले ([3]) परमाणुसंयोगविनाशात् तदारब्धस्य द्व्यणुकस्य विनाशः तस्मिन् द्व्यणुके विनष्टे तदाश्रितस्य द्व्यणुकाणुविभागस्य विनाशः ततो विभागस्य कारणस्याभावात् परमाणोराकाशदेशविभागानुत्पादे पूर्वसंयोगानिवृत्तावुत्तरसंयोगस्य विरोधिगुणस्य विनाशहेतोरसम्भवान्नित्यपरमाणुसमवेतस्य कर्मणो नित्यत्वं स्यात् । पूर्वोक्तं तावत्परिहरति । तन्त्वंश्वन्तरविभागाद्विभाग इति ([4]) । कार्याविष्टे कारणे कर्मोत्पन्नमवयवान्तरेण समं स्वाश्रयस्य विभागं कुर्वदाकाशादिदेशाद्विभागं न करोतीति नियमः । आकाशादिदेशविभागकर्तृत्वस्य विशिष्टविभागानारम्भकत्वेन व्याप्तत्वात् अवयवान्तरस्यावयवेन स्वाश्रयसंयोगिना समं तु करोत्येव विरोधाभावात् अतो द्वितन्तुककारणे तन्तौ कर्मोत्पन्नं तन्त्वन्तराद्विभागसमकालं तदंशुनापि तन्तुसंयुक्तेन समं विभागमारभते स च विभागस्तन्तोरंशोश्चावस्थानादवस्थित इत्याह । आश्रयविनाशा([5])त्तन्त्वोरेव विभागो विनष्टः तन्त्वंश्वन्तरविभागस्त्ववस्थित इति । किमतो यद्येवमित्यत आह । एतस्मादिति । अङ्गुल्याकाशविभागाच्छरीराकाशविभागवत् । यथा कर्मजादङ्गुल्याकाशविभागाच्छरीराकाशविभागः । एवं कर्मजादंशुतन्तुविभागात् तन्त्वाकाशवि-

(१) मूले पृ॰ १५३ प॰ ११ । (२) सक्रियस्य तन्तोः-इत्यधिकं ३ पु॰ ।
(३) परमाण्वोर्विभागाद् द्रव्यारम्भकस्य संयोगस्य विनाशस्तदेवाणुकर्मणा द्व्यणुकाण्वोर्विभागस्ततो यस्मिन्नेव काले द्व्यणुकाणुविभागाद् द्व्यणुकाणुसंयोगस्य विनाशस्तस्मिन्नेव काले-इत्यधिकं ३ पु॰ । तच्च युज्यते । (४) मूले पृ॰ १५४ प॰ ३ । (५) आश्रयविभागात्-पा॰ १ पु॰ ।

भाग इत्युदाहरणार्थः । हस्ताकाशविभागाच्छरीराकाशविभागो युक्तो न त्वङ्गुल्याकाशविभागादङ्गुलेः[१] शरीरं प्रत्यकारणत्वादिति चेत् हस्तोपि बाहोराश्रयो न शरीरस्य कुतस्तद्विभागादपि शरीरविभागादपि[२] शरीरविभागः । अथ समस्तावयवव्यापित्वाच्छरीरस्य हस्तोप्याश्रय एवमङ्गुल्यप्याश्रयो हस्ताङ्गुल्याद्यवयवसमुदाये शरीरप्रत्यभिज्ञानात् तस्मिंस्तन्त्वाकाशविभागे जाते पूर्वसंयोगस्य प्रतिबन्धकस्य निवृत्तौ तन्तुसमवेतं कर्मोत्तरसंयोगं कृत्वा ततो विनश्यतीत्याह । तस्मिन्निति । प्रकारान्तरेणाप्याश्रयविनाशाद्विनाशं कथयति । अथवेति[३] । अंश्वन्तरविभागोत्पत्तिसमकालं तस्मिन्नेव तन्तौ विभज्यमानावयवे कर्मोत्पद्यते ततो विभागात् तन्त्वारम्भकस्यांशुसंयोगस्य विनाशः तन्तुकर्मणा च तस्य तन्तोस्तन्त्वन्तराद्विभाग इत्येकः कालः तदनन्तरं संयोगस्य विनाशात् तदारब्धस्य तन्तोर्विनाशः तद्विनाशाच्च तदाश्रितयोर्विभागकर्मणोर्युगपद्विनाशः । यच्च नित्यसमवेतस्य नित्यत्वमिति चोदितम्[४] तच प्रतिसमाधानं नोक्तं तस्यात्यन्तमसङ्गतार्थत्वात् । कार्याविष्टे हि कारणे कर्मोत्पन्नमवयवान्तरविभागसमकालमाकाशादिदेशेन समं विभागं न करोति आकाशादिविभागकर्तृत्वस्य द्रव्यारम्भकसंयोगविरोधिविभागोत्पादकत्वस्य च विरोधात् अनारम्भके तु द्व्यणुकसंयोगिनि परमाणौ कर्म द्व्यणुकविभागसमकालं तस्याकाशदेशेन समं विभागं करोत्येव ततो विभागाच्च परमाणोराकाशसंयोगनिवृत्तावुत्तरसंयोगे सति तदाश्रितस्य कर्मणो विनाशो भवत्येव समानजातीयसंयोगे सति द्रव्योत्पत्तावाश्रयविनाशाद्विभागकर्मणोर्विनाशः कथितः संप्रति विजातीयसंयोगे द्रव्यानुत्पत्तौ संयोगाश्रयविनाशाभ्यां विभागविनाशं कथयति । तन्तुवीरणयोर्वा संयोगे सति द्रव्यानुत्पत्तौ[५] पूर्वोक्तेन विधानेनेति[६] । तन्त्वारम्भकांशौ कर्मोत्पत्तिसमकालं वीरणे कर्म ततोंशुक्रियया अंश्वन्तराद्विभागो वीरणकर्मणा च तस्य विभज्यमानावयवेन तन्तुनाकाशदेशेन च समं विभागः क्रियते ततोंशुविभागादंशुसंयोगविनाशो वीरणविभागाच्च तन्तुवीरणसंयोगस्याकाशवीरणसंयोगस्य च विनाशः ततोंशुसंयोगविनाशात् तन्तु-

---

(१) अङ्गुल्याः–पा॰ ३ पु॰ । (२) शरीरविभागादपीति पुस्तकचतुष्टयेप्यस्ति परन्त्वसम्बद्धः ।
(३) मूले पृ॰ १५४ प॰ ८ । (४) नोदितम्–पा॰ २ पु॰ ।
(५) द्रव्यानुत्पत्तौ–इति नास्ति १ पु॰ । (६) मूले पृ॰ १५४ प॰ १४ ।

विनाशो वीरणस्य चोत्तरसंयोगोऽत उत्तरसंयोगाश्रयविनाशाभ्यां (१) तन्तुवीरणविभागस्य विनाश इति प्रक्रिया॥

परत्वमपरत्वं च (२) परापराभिधानप्रत्ययनिमित्तम् (३)। तत्तु द्विविधं दिक्कृतं कालकृतं च। तत्र दिक्कृतं दिग्विशेषप्रत्यायकम्। कालकृतं च वयोभेदप्रत्यायकम्। तत्र दिक्कृतस्योत्पत्तिरभिधीयते। कथम्। एकस्यां दिश्यवस्थितयोः(४) पिण्डयोः संयुक्तसंयोगबह्वल्पभावे सत्येकस्य द्रष्टुः सन्निकृष्टमवधिं कृत्वा एतस्माद्विप्रकृष्टोऽयमिति परत्वाधारेऽसन्निकृष्टा बुद्धि(५)रुत्पद्यते। ततस्तामपेक्ष्य परेण दिक्प्रदेशेन संयोगात् परत्वस्योत्पत्तिः। तथा विप्रकृष्टं चावधिं कृत्वा एतस्मात् सन्निकृष्टोयमित्यपरत्वाधारे इतरस्मिन् सन्निकृष्टा बुद्धिरुत्पद्यते। ततस्तामपेक्ष्यापरेण दिक्प्रदेशेन संयोगादपरत्वस्योत्पत्तिः। कालकृतयोरपि कथम्। वर्तमानकालयो(६)रनियतदिग्देशसंयुक्तयोर्युवस्थविरयो रूढश्मश्रुकार्कश्य(७)बलिपलितादिसान्निध्ये सत्येकस्य द्रष्टुर्युवानमवधिं कृत्वा स्थविरे विप्रकृष्टा बुद्धिरुत्पद्यते। ततस्तामपेक्ष्य परेण कालप्रदेशेन संयोगात् परत्वस्योत्पत्तिः। स्थविरं चावधिं कृत्वा यूनि सन्निकृष्टा बुद्धिरुत्पद्यते। ततस्तामपेक्ष्यापरेण कालप्रदेशेन संयोगादपरत्वस्योत्पत्तिरिति। विनाशस्त्वपेक्षाबुद्धिसंयोगद्रव्यविनाशात्। अपेक्षाबुद्धिविनाशात् तावदु-

---

(१) संयोगाश्रयविनाशाभ्यां-पा॰ ३ पु॰। (२) परत्वापरत्वं च-पा॰ १ पु॰।
(३) परापरप्रत्ययनिमित्तं-पा॰ ५ पु॰। (४) दिशि व्यवस्थितयोः-पा॰ ५ पु॰।
(५) असन्निकृष्टबुद्धिरिति साधुः एवमग्रेपि। (६) वर्तमानयोरिति-पा॰ १। ५। ६ पु॰।
(७) वार्द्धक्य-पा॰ ६ पु॰।

त्पन्ने परत्वे यस्मिन् काले सामान्य(१)बुद्धिरुत्पन्ना भवति ततोऽपेक्षाबुद्धेर्विनश्यत्ता सामान्यज्ञानतत्सम्बन्धेभ्यः परत्वगुणबुद्धेरुत्पद्यमानतेत्येकः कालः । ततोऽपेक्षाबुद्धेर्विनाशो गुणबुद्धेश्चोत्पत्तिः ततोऽपेक्षाबुद्धिविनाशाद्गुणस्य विनश्यत्ता गुणज्ञानतत्सम्बन्धेभ्यो द्रव्यबुद्धेरुत्पद्यमानतेत्येकः कालः । ततो द्रव्यबुद्धेरुत्पत्तिर्गुणस्य विनाश(२) इति । संयोगविनाशादपि(३) कथम् । अपेक्षाबुद्धिसमकालमेव परत्वाधारे कर्मोत्पद्यते तेन कर्मणा(४) दिक्पिण्डविभागः क्रियते अपेक्षाबुद्धितः परत्वस्योत्पत्तिरित्येकः कालः । ततः सामान्यबुद्धेरुत्पत्तिः दिक्पिण्डसंयोगस्य च विनाशः ततो यस्मिन् काले गुणबुद्धिरुत्पद्यते तस्मिन्नेव काले दिक्पिण्डसंयोगविनाशाद्गुणस्य विनाशः । द्रव्यविनाशादपि कथम् । परत्वाधारावयवे कर्मोत्पन्नं यस्मिन्नेव कालेऽवयवान्तराद्विभागं करोति तस्मिन्नेव कालेऽपेक्षाबुद्धिरुत्पद्यते ततो विभागाद्यस्मिन्नेव काले संयोगविनाशः तस्मिन्नेव काले परत्वमुत्पद्यते ततः संयोगविनाशाद् द्रव्यविनाशः तद्विनाशाच्च(५) तदाश्रितस्य गुणस्य विनाशः । द्रव्यापेक्षाबुद्ध्योर्युगपद्विनाशादपि (६) कथम् । यदा परत्वाधारावयवे कर्मोत्पद्यते तदैवापेक्षाबुद्धिरुत्पद्यते(७) कर्मणा चावयवान्तरा-

---

(१) परत्वसामान्य–पा॰ ६ पु॰ । (२) गुणस्य च नाश इति–पा॰ ६ पु॰ । ६ पुस्तके विनाशस्य स्थाने नाश इति पाठः प्रायो दृश्यते । (३) कालसंयोगविनाशादपि–पा॰ ६ पु॰ । (४) तत्कर्मणा–पा॰ १ पु॰ (५) द्रव्यनाशः सामान्यबुद्धेश्चोत्पादः द्रव्यनाशाच्च–पा॰ ६ पु॰ । (६) बुद्ध्योर्विनाशादपि–पा॰ १ पु॰ । (७) तदैवापेक्षाबुद्धिरुत्पद्यते–इति नास्ति १ पु॰ ।

द्विभागः क्रियते परत्वस्योत्पत्तिरित्येकः कालः । ततो यस्मिन्नेव काले ऽवयवविभागाद् द्रव्यारम्भकसंयोगविनाशस्तस्मिन्नेव काले सामान्यबुद्धिरुत्पद्यते तदनन्तरं संयोगविनाशाद् द्रव्यविनाशः सामान्यबुद्धेश्चापेक्षाबुद्धिविनाश इत्येकः कालः । ततो द्रव्यापेक्षाबुद्धोर्विनाशात् परत्वस्य विनाशः । द्रव्यसंयोगविनाशादपि कथम् । यदा परत्वाधारावयवे(१) कर्मोत्पन्नमवयवान्तराद्विभागं करोति तस्मिन्नेव काले पिण्डकर्मापेक्षाबुद्धोर्युगपदुत्पत्तिः ततो यस्मिन्नेव काले परत्वस्योत्पत्तिस्तस्मिन्नेव काले विभागाद् द्रव्यारम्भकसंयोगविनाशः पिण्डकर्मणा दिक्पिण्डस्य च विभागः क्रियते इत्येकः कालः । ततो यस्मिन्नेव काले सामान्यबुद्धिरुत्पद्यते तस्मिन्नेव काले द्रव्यारम्भकसंयोगविनाशात् पिण्डविनाशः पिण्डविनाशाच्च पिण्डसंयोगविनाशः(२) ततो गुणबुद्धिसमकालं पिण्डदिक्पिण्डसंयोगविनाशात्(३) परत्वस्य विनाशः । संयोगापेक्षाबुद्धोर्युगपद्विनाशादपि कथम् । यदा परत्वमुत्पद्यते तदा परत्वाधारे कर्म ततो यस्मिन्नेव काले परत्वसामान्यबुद्धिरुत्पद्यते तस्मिन्नेव काले पिण्डकर्मणा दिक्पिण्डविभागः क्रियते ततः सामान्यबुद्धितोऽपेक्षाबुद्धिविनाशो विभागाच्च दिक्पिण्डसंयोगविनाश इत्येकः कालः । ततः संयोगापेक्षाबुद्धिविनाशात्

---

(१) द्रव्यावयवे—पा॰ ६ । ७ पु॰ । (२) विभागाच्च दिक्पिण्डसंयोगविनाशः—पा॰ ५ पु॰ ।
(३) संयोगयोर्विनाशात्—पा॰ ५ पु॰ । द्रव्यपिण्डसंयोगविनाशात् पा॰ ६ पु॰ ।

परत्वस्य विनाशः । त्रयाणां समवाय्यसमवायिनिमित्तकारणानां[1] युगपद् विनाशादपि कथम् । यदापेक्षाबुद्धिरुत्पद्यते तदा पिण्डावयवे कर्म ततो यस्मिन्नेव काले कर्मणावयवान्तराद्विभागः क्रियते ऽपेक्षाबुद्धेः[2] परत्वस्य चोत्पत्तिस्तस्मिन्नेव काले पिण्डेपि कर्म ततोऽवयवविभागात् पिण्डारम्भकसंयोगविनाशः पिण्डकर्मणा च दिक्पिण्डविभागः क्रियते सामान्यबुद्धेश्चोत्पत्तिरित्येकः कालः । ततः संयोगविनाशात् पिण्डविनाशः विभागाच्च दिक्पिण्डसंयोगविनाशः सामान्यज्ञानादपेक्षाबुद्धेर्विनाश इत्येतत् सर्वं युगपत्त्रयाणां समवाय्यसमवायिनिमित्तकारणानां[3] विनाशात् परत्वस्य विनाश इति ॥

परत्वमपरत्वं च परापराभिधानप्रत्ययनिमित्तमिति । परमित्यभिधानस्य प्रत्ययस्य च निमित्तं परत्वम् । अपरमित्यभिधानप्रत्यययोर्निमित्तमपरत्वमिति कार्येण सत्तां प्रतिपादयति । यद्यप्याकाशं कण्ठाद्याकाशसंयोगादिकं च परापराभिधानयोः कारणं भवति यद्यप्यात्ममनःसंयोगादिकं च परापरप्रतीतिकारणं स्यात् तथापि निमित्तान्तरसिद्धिः विशिष्टप्रत्ययस्य कारणविशेषमन्तरेणो[4]त्पत्त्यभावात् । एकत्र द्वयोरुपन्यासस्तयोरितरेतरसापेक्षत्वात् । तद् द्विविधं तत् परत्वमपरत्वं च द्विविधं द्विप्रकारमिति भेदनिरूपणम् । किंकृतस्तयोर्भेद इत्याशङ्क्य कारणभेदाद्भेदमाह । दिक्कृतं कालकृतं चेति [5] । दिक्पिण्डसंयोगकृतं दिक्कृतम् । कालपिण्डसंयोगकृतं कालकृतम् । अनयोर्भेदः कुतः प्रत्येतव्यः कार्यभेदादित्याह । दिक्कृतं दिग्विशेषप्रत्यायकं कालकृतं तु वयोभेदप्रत्यायकम् दिक्कृतं परत्वं देशविप्रकृष्टत्वं प्रत्याययति अपरत्वं च देशसन्निकृष्टत्वम् ।

---

(१) निमित्तानां-पा॰ ६ पु॰ ।
(२) अपेक्षाबुद्धेः-इति नास्ति १ पु॰ ।
(३) निमित्तानां-पा॰ ५ पु॰ ।
(४) प्रत्ययस्यासाधारणकारणमन्तरेण-पा॰ ३ पु॰ ।
(५) मूले पृ॰ १६४ प॰ ४ ।

कालकृतं तु परत्वं पिण्डस्य कालविप्रकृष्टत्वं प्रतिपादयति अपरत्वं च कालस-न्निकृष्टत्वमिति विशेषः। तत्र तयोर्दिक्कृतकालकृतयोर्मध्ये दिक्कृतस्योत्पत्तिरभि-धीयते। कथमिति प्रश्ने सत्युत्तरमाह। एकस्यामिति। पूर्वापरदिग्व्यवस्थितयोः पिण्डयोः परापरप्रत्ययौ न सम्भवतः तदर्थमेकस्यां दिश्यवस्थितयोरित्युक्तम् एकस्यां दिशि प्राच्यां वा प्रतीच्यां वाऽवस्थितयोः पिण्डयोर्मध्ये एकस्य द्रष्टुः संयुक्तेन भूप्रदेशेन [1]सहापरस्य प्रदेशस्य संयोगः तेनापि सममपरस्येति संयु-क्तसंयोगानां बहुत्वे सत्यल्पसंयोगवन्तं पिण्डं सन्निकृष्टमवधिं कृत्वैतस्मात् पि-ण्डाद्विप्रकृष्टोयमिति संयोगभूयस्त्ववति भविष्यतः परत्वस्याधारे पिण्डे विप्र-कृष्टा बुद्धिरुदेति ततो विप्रकृष्टबुद्ध्युत्पत्त्यनन्तरं[2] विप्रकृष्टां बुद्धिमपेक्ष्य परेण संयोगभूयस्त्ववता दिक्प्रदेशेन संयोगादसमवायिकारणाद्विप्रकृष्टे पिण्डे समवा-यिकारणभूते परत्वस्योत्पत्तिः। द्रष्टुः स्वशरीरापेक्षया संयुक्तसंयोगभूयस्त्ववन्तं विप्रकृष्टं चावधिं कृत्वेतरस्मिन् संयुक्तसंयोगाल्पीयस्त्ववति सन्निकृष्टा बुद्धिरु-देति तां सन्निकृष्टां बुद्धिं निमित्तकारणीकृत्यापरेण संयुक्तसंयोगाल्पीयस्त्वविशि-ष्टेन दिक्प्रदेशेन सह संयोगादसमवायिकारणात् सन्निकृष्टे पिण्डे समवायिकारणे परत्वस्योत्पत्तिः। सन्निकृष्टविप्रकृष्टबुद्ध्योः परस्परापेक्षित्वादुभयाभावप्रसङ्ग इति चेन्न अनभ्युपगमात् न सन्निकृष्टोयमित्येवं प्रतीत्यैव तदपेक्षया विप्रकृष्ट-बुद्धिः नापि विप्रकृष्टोयमिति प्रतीत्यैव तदपेक्षया सन्निकृष्टबुद्ध्युदयः किं तु संयोगाल्पीयस्त्वसहचरितं पिण्डं प्रतीत्यैव तदपेक्षया संयोगभूयस्त्ववति विप्र-कृष्टबुद्धिः। एवं संयोगभूयस्त्वसहचरितं पिण्डं प्रतीत्यैव तदपेक्षया संयो-गाल्पीयस्त्ववति सन्निकृष्टबुद्ध्युत्पत्तिरिति न परस्परापेक्षित्वमनयोः। कालकृ-तयोरपि कथम्। दिक्कृतयोस्तावत्परत्वापरत्वयोरुत्पत्तिः कथिता कालकृत-योरपि तयोरुत्पत्तिः कथमिति प्रश्नः। समाधानं वर्तमानकालयोरिति[3]। द्वयोरेकस्मिन् वा पिण्डे ऽविद्यमाने परत्वापरत्वे न भवतः तदर्थं वर्तमानका-लयोरित्युक्तम्। अनियतदिग्देशयोरित्येकदिश्यवस्थितयोर्भिन्नदिगवस्थितयोर्वा युवस्थविरयो रूढश्मश्रु च कार्कश्यं च बलिश्च पलितं च तेषां कालविप्रकर्षलि-ङ्गानां सान्निध्ये सत्येकस्य द्रष्टुर्युवानं रूढश्मश्रुकार्कश्याद्यभावानुमितमल्पो-त्पत्तिकालमवधिं कृत्वा रूढश्मश्रुर्बलिपलितादिमति स्थविरे विप्रकृष्टा बुद्धि-

(१) संयुक्तेन तु प्रदेशेन—पा॰ २ पु॰। (२) बुद्ध्यनन्तरं—पा॰ १ पु॰। (३) मूले पृ॰ १६४ प॰ १४।

रुत्पद्यते तां बुद्धिमपेक्ष्य परेणादित्यपरिवर्तनभूयस्त्ववता कालप्रदेशेन संयोगादसमवायिकारणात् तस्मिन्नेव स्थविरे परत्वस्योत्पत्तिः स्थविरं चावधिं कृत्वा यूनि सन्निकृष्टा बुद्धिरुत्पद्यते तां बुद्धिमपेक्ष्यापरेणाल्पादित्यपरिवर्तनोपलक्षितेन कालप्रदेशेन संयोगादपरत्वस्योत्पत्तिः युवस्थविरशरीरयोः कालसंयोगाल्पीयस्त्वभूयस्त्वे शरीरसन्तानापेक्षया न तु व्यक्तिविषयत्वेन तयोः प्रतिक्षणं विनाशात् कृतकस्यावश्यं विनाशः स च निर्हेतुको न भवतीति परत्वापरत्वयोर्विनाशहेतुमाह। विनाशस्त्विति(१)। परत्वापरत्वयोर्विनाशोऽपेक्षाबुद्धिविनाशात् संयोगविनाशाद् द्रव्यविनाशाद् द्रव्यापेक्षाबुद्ध्योर्विनाशाद् द्रव्यसंयोगयोर्विनाशात् संयोगापेक्षाबुद्ध्योर्विनाशा(२)दपेक्षाबुद्धिसंयोगद्रव्याणां विनाशादिति सप्तविधो विनाशक्रमः। अपेक्षाबुद्धिविनाशात् तावद्विनाशः कथ्यते। उत्पन्ने परत्वे यस्मिन्नेव काले परत्वसामान्ये बुद्धिरुत्पन्ना भवति। तत इति सप्तम्यर्थे सार्वविभक्तिकस्तसिलिति तसिल्(३)। एतस्मिन्नेव कालेऽपेक्षाबुद्धेर्विनश्यत्ता विनाशकारणसान्निध्यम्। सामान्यतज्ज्ञानतत्सम्बन्धेभ्यः परत्वसामान्यं च परत्वसामान्यज्ञानं च परत्वगुणसम्बन्धश्च तेभ्यः परत्वगुणबुद्धेरुत्पद्यमानतेत्येकः कालः। परत्वसामान्यज्ञानमेवापेक्षाबुद्धिविनाशकारणम् गुणबुद्धेश्चोत्पत्तिकारणम् अतस्तदुत्पाद एवापेक्षाबुद्धेर्विनश्यत्ता गुणबुद्धेश्चोत्पद्यमानता स्यात्। ततः क्षणान्तरे ऽपेक्षाबुद्धेर्विनाशः परत्वगुणबुद्धेश्चोत्पादः ततस्तस्मादपेक्षाबुद्धिविनाशाद् गुणस्य विनश्यत्ता। गुणश्च गुणज्ञानं च तत्सम्बन्धश्च तेभ्यो द्रव्यबुद्धेरुत्पद्यमानतेत्येकः कालः। अपेक्षाबुद्धिविनाशो गुणविनाशस्य कारणम् गुणबुद्धिश्च द्रव्यबुद्धेः कारणम् अपेक्षाबुद्धिविनाशगुणबुद्ध्युत्पादौ च युगपत् स्याताम् अतो गुणस्य विनश्यत्ता द्रव्यबुद्धेश्चोत्पद्यमानतापि युगपत् स्यात् ततः परत्वविशिष्टद्रव्यबुद्धेरुत्पादः परत्वगुणस्य च विनाशः। संयोगविनाशादपि कथं परत्वापरत्वयोर्विनाश इति प्रश्ने कृते सत्याह। अपेक्षाबुद्धिसमकालमेव परत्वस्याधारे पिण्डे कर्मोत्पद्यते(४) क्षणान्तरे तेन कर्मणा दिक्परत्वाधारपिण्डस्य च विभागः क्रियते अपेक्षाबुद्धेश्च परत्वस्योत्पत्तिरित्येकः कालः। तत उत्पन्ने परत्वे परत्वसामान्यबुद्धेरुत्पत्तिः दिक्पिण्डसंयोगस्य च विभागा-

---

(१) मूले पृ॰ १६४ प॰ २१। (२) अपेक्षाबुद्धिसंयोगविनाशात्—पा॰ १ पु॰।
(३) तसिरिति तसिः—पा॰ ३ पु॰। (४) मूले पृ॰ १६५ प॰ ८।

द्विनाश इत्येकः कालः। ततो यस्मिन्नेव काले सामान्यज्ञानाद् गुणबुद्धिरुत्पद्यते तस्मिन्नेव काले दिक्पिण्डसंयोगविनाशात् परत्वस्य विनाशो नापेक्षाबुद्धिविनाशादपेक्षाबुद्धेरपि तदानीमेव विनाशात्। द्रव्यविनाशादपि कथं विनाश इत्याह। परत्वाधारावयव इति। भविष्यतः परत्वस्याधारो द्रव्यं तस्यावयवे कर्मोत्पन्नं यदा(१)वयवान्तराद्विभागं करोति तस्मिन्नेव काले ऽपेक्षाबुद्धिरुत्पद्यते ततो विभागाद्यस्मिन्नेव काले द्रव्यारम्भकसंयोगविनाशः तस्मिन्नेव काले ऽपेक्षाबुद्धेः परत्वमुत्पद्यते ततः संयोगविनाशाद् द्रव्यविनाशः ततो द्रव्यविनाशात् तदाश्रितस्य गुणस्य विनाशस्तदानीमेव परत्वसामान्यज्ञानादपेक्षाबुद्धेर्विनाशः आश्रयविनाशाच्च दिक्पिण्डसंयोगविनाश इत्यनयोर्न हेतुत्वं सहभावित्वाद्। द्रव्यापेक्षाबुद्ध्योर्युगपद्विनाशादपि कथम्। यदैव परत्वाधारावयवे कर्मोत्पद्यते तदैवापेक्षाबुद्धिरुत्पद्यते कर्मणा चावयवान्तराद्विभागः क्रियते परत्वस्योत्पत्तिरित्येकः कालः। ततो यस्मिन्नेव काले ऽवयवविभागाद् द्रव्यारम्भकसंयोगविनाशः तस्मिन्नेव काले परत्वसामान्ये ज्ञानमुत्पद्यते(२) तदनन्तरं संयोगविनाशाद् द्रव्यविनाशः सामान्यबुद्धेश्चापेक्षाबुद्धेरपि विनाश इत्येकः कालः। ततो द्रव्यापेक्षाबुद्ध्योर्विनाशात् परत्वस्य विनाशः प्रत्येकमन्यथोभयोरपि विनाशं प्रति कारणत्वप्रतीतेः। इह चान्यतरविशेषानवधारणादुभयोरपि विनाशं प्रति कारणत्वम्। द्रव्यसंयोगविनाशादपीत्यादि(३)। द्रव्यसंयोगविनाशादपि(४) कथम् विनाशः। यदा परत्वाधारावयवे(५) कर्मोत्पन्नमवयवान्तराद्विभागं करोति तस्मिन्नेव काले पिण्डकर्मापेक्षाबुद्ध्योर्युगपदुत्पत्तिः ततो यस्मिन्नेव काले परत्वस्योत्पत्तिस्तस्मिन्नेव काले ऽवयवविभागाद् द्रव्यारम्भकसंयोगविनाशः पिण्डकर्मणा च दिक्पिण्डस्य च विभागः क्रियते इत्येकः कालः। ततो यस्मिन्नेव काले सामान्यबुद्धिरुत्पद्यते तस्मिन्नेव काले द्रव्यारम्भकसंयोगविनाशात् पिण्डविनाशः पिण्डविनाशाच्च पिण्डसंयोगविनाशः(६) ततो गुणबुद्धिसमकालं पिण्डदिक्पि-

(१) यस्मिन्नेव काले—पा॰ २ पु॰। (२) परत्वसामान्ये सामान्यबुद्धिरुत्पद्यते—पा॰ २ पु॰।

(३) द्रव्यसंयोगविनाशादपीत्यादिः त्रयाणां समवाय्यसमवायिनिमित्तानां विनाशादपीत्यन्तो ग्रन्थः कन्दल्यां नास्ति १ पु॰ मूलात्मकत्वात् तत्र प्रतीकधारणमेव कृतम्।

(४) मूले पृ॰ १६६ प॰ ६। द्रव्यस्य संयोगस्य च विनाशादपि—पा॰ २ पु॰।

(५) यदा तु द्रव्यावयवे—पा॰ २ पु॰।

(६) दिक्पिण्डविभागाच्च दिक्पिण्डसंयोगनाशः—पा॰ २ पु॰।

ण्डसंयोगविनाशात्(१) परत्वस्य विनाशः । अपेक्षाबुद्धिविनाशस्तु न कारणं तदानीमेव सामान्यबुद्धेस्तस्य सम्भवात् । संयोगापेक्षाबुद्ध्योर्युगपद्विनाशादपि कथम्(२) । यदा परत्वमुत्पद्यते तदा(३) परत्वस्याधारे द्रव्ये कर्म ततो यस्मिन्नेव काले परत्वसामान्यबुद्धिरुत्पद्यते परत्वस्याधारे तस्मिन्नेव काले पिण्डकर्मणा दिक्पिण्डविभागः क्रियते ततः सामान्यबुद्धितो(४)ऽपेक्षाबुद्धिविनाशो दिक्पिण्डविभागाच्च दिक्पिण्डसंयोगविनाश इत्येकः कालः । ततः संयोगापेक्षाबुद्धिविनाशात् परत्वस्य विनाशः । द्रव्यविनाशस्तु तदानीं नास्त्येवेति न तस्य हेतुत्वम् । त्रयाणां समवाय्यसमवायिनिमित्तकारणानां विनाशादपि कथम्(५) । समवायि चासमवायि च निमित्तं च समवाय्यसमवायिनिमित्तानि तानि च कारणानि चेति समवाय्यसमवायिनिमित्तकारणानि द्रव्यसंयोगापेक्षाज्ञानानि तेषां त्रयाणां युगपद्विनाशात् कथं परत्वस्य विनाश इति प्रश्ने कृते प्रत्युत्तरमाह । यदेति । इत्येतत् सर्वं युगपद्भवति कारणयौगपद्यात् ततश्च त्रयाणां समवाय्यसमवायिनिमित्तकारणानां विनाशात् परत्वस्य विनाश इति । परत्वस्य विनाश इत्युपलक्षणमिदम् अपरत्वस्याप्ययमेव विनाशक्रमो दर्शयितव्यः ॥

## बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इति पर्यायाः(६) ॥

बुद्धिजे परत्वापरत्वे इति समर्थितं । अथ केयं बुद्धिरित्याह । बुद्धिरित्यादि । प्रधानस्य विकारो महदाख्यमन्तःकरणं चित्तापरपर्यायं बुद्धिः बुद्धीन्द्रिय(७)प्रणालिकया बाह्यविषयोपरक्तायास्तदाकारोपग्रहवती सत्त्वगुणाश्रया वृत्तिर्ज्ञानम् प्राप्तविषयाकारोपग्रहायां बुद्धौ प्रतिबिम्बितायाश्चेतनाशक्तेस्तद्वृत्त्यनुकार उपलब्धिः । तथा चाहस्म भगवान् पतञ्जलिः अपरिणामिनी हि भोक्तृशक्तिरप्रतिसङ्क्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुभवतीति(८) भोक्तृशक्तिरिति चितिशक्तिरुच्यते सा चात्मैव । परिणामिन्यर्थे इति बुद्धितत्त्वे प्रतिसङ्क्रान्तेवेति प्रतिबिम्बितेवेत्यर्थः । तद्वृत्तिमनुभवति बुद्धौ प्रतिबिम्बिता सती बुद्धिच्छायापत्त्या बुद्धिवृत्त्यनुकारिणी

(१) दिक्पिण्डसंयोगयोरुभयोर्विनाशात्–पा॰ २ पु॰ । (२) मूले पृ॰ १६६ पं॰ १७ ।
(३) तदैव–पा॰ २ पु॰ । (४) परत्वसामान्यज्ञानात्–पा॰ २ पु॰ ।
(५) मूले पृ॰ १६७ पं॰ १ । (६) प्रत्येकं पर्यायाः–पा॰ ५ पु॰ । इत्येकपर्यायाः–पा॰ ६ पु॰ ।
(७) ज्ञानेन्द्रिय–इति । (८) योगसूत्रभाष्ये २ पादे २० सूत्रव्याख्याने ।

भवतीत्यर्थः[1]। बुद्धेर्विषयः सुखाद्याकारः प्रत्ययः। तथा चाह स एव भगवान् शुद्धोपि पुरुषः प्रत्ययं बौद्धमनुपश्यति अनुपश्यन्नतदात्मापि तदात्मक इव प्रत्यवभासते इति[2]। एतत् सांख्यमतं निराकर्तुमाह। बुद्धिरित्यादि। यस्या अमी पर्यायशब्दाः सा बुद्धिः। या पुनरियं प्रक्रियोपदर्शिता सा प्रतीत्यभावादेव पराणुद्यते। विषयहानोपादानानुगुणमुत्पादव्ययधर्मकमेकं तदधिकरणं चापरं यस्य तदुत्पादात् प्रवृत्तिनिवृत्ती स्याताम् इत्युभयं प्रत्यात्ममनुभूयते न प्रकारान्तरम् या चास्या बुद्धेर्वृत्तिः सा किं बुद्धेरन्याऽनन्या वा न तावदन्या वृत्तिवृत्तिमतोरैकान्तिकतादात्म्याभ्युपगमात्। अथानन्या तदा बुद्धेरेकत्वे विषयाकारवतीनां तद्वृत्तीनामप्येकत्वात् चिचतुरादिप्रत्ययो दुर्लभः परस्परविलक्षणाकारसंवेदनाभावात् बुद्ध्यारूढाकारमात्रवेदित्वाच्च पुरुषस्य। यथोक्तम् बुद्धेः प्रतिसंवेदी पुरुष इति वृत्तीनां वा नानात्वे बुद्धेरपि नानात्वादेकत्वव्याघात इत्यादि दूषणमूह्यम्॥

**सा चानेकप्रकारार्थानन्त्यात्प्रत्यर्थनियतत्वाच्च॥**

बुद्धेर्भेदं निरूपयति। सा चानेकप्रकारेति। अत्र कारणमाह। अर्थानन्त्यादिति। यदि नामार्थस्य विषयस्यानन्तत्वं बुद्धेरनेकविधत्वे किमायातं तत्राह। प्रत्यर्थनियतत्वाच्चेति। प्रत्यर्थं प्रतिविषयमस्मदादिबुद्धयो नियताः अर्थाश्चानन्ता इति प्रत्येकं तत्र बुद्धयोप्यनन्ताः यदि क्वचिदनेकविषय[3]मेकं विज्ञानं तदपि तावदर्थनियतत्वादतदर्थाद्विज्ञानान्तराद्विलक्षणमेवेत्यदोषः॥

**तस्याः सत्यप्यनेकविधत्वे समासतो द्वे विधे[4] विद्या चाविद्या चेति। तत्राविद्या चतुर्विधा संशयविपर्ययानध्यवसायस्वप्नलक्षणा॥**

बुद्धेर्विषयभेदेन सत्यपि भेदे संक्षेपतो द्वैविध्यमाह। तस्या इति। निःसन्दिग्धाबाधिताध्यवसायात्मिका[5] प्रतीतिर्विद्या तद्विपरीता चाविद्येति। अत्र प्रतिपादनमात्रस्य विवक्षितत्वात् पश्चादुद्दिष्टामप्यविद्यां प्रथमं कथयति। तत्रेति। तयोर्विद्याविद्ययोर्मध्ये अविद्या चतुर्विधा चतुष्प्रकारा संशयविपर्यया-

---

(१) अनुकारवतीत्यर्थः—पा॰ ४ पु॰। (२) योगसूत्रभाष्ये २ पादे २० सूत्रव्याख्याने।
(३) अनेकार्थविषय—पा॰ ३ पु॰। (४) द्विविधा—प॰ ५ पु॰।
(५) व्यवसायात्मिका—पा॰ २ पु॰।

नध्यवसायस्वप्नलक्षणा । नन्वविद्या चतुर्विधेति परिसंख्यानानुपपत्तिः रूढस्य तर्कज्ञानस्यापि सम्भवात् अनुभूयते ह्यन्तरा संशयं निर्णयं च तर्कः । तथाहि उत्पत्तिधर्मक आत्मेत्येके । अनुत्पत्तिधर्मक इत्यपरे । ततो विप्रतिपत्तेः किंस्विदयमुत्पत्तिधर्मा आहोस्विदेवं न भवतीति संशये विचारात्मक([1])स्तर्कः प्रवर्तते । यद्ययमुत्पत्तिधर्मकः तदैकस्यानेकशरीरादिसंयोगलक्षणः संसारस्तदत्यन्तविमोक्षलक्षणश्चापवर्गो नोपपद्यते । अनुत्पत्तिधर्मके तु ज्ञातरि स्यातां संसारापवर्गावित्यनुत्पत्तिधर्मकेणानेन भवितव्यमिति । किमस्य सम्भावनाप्रत्ययस्य प्रयोजनं तत्त्वज्ञानमेव प्रतिपक्षनिश्चयवत्प्रतिपक्षसंशयेपि हि हेतोरप्रवृत्तिरेव वस्तुनो द्वैरूप्याभावात् । यथाहुर्भट्टमिश्राः ॥

यावच्चाव्यतिरेकित्वं शतांशेनापि शङ्क्यते ।
विपक्षस्य कुतस्तावद्धेतोर्गमनिका बलम् ॥ इति ।

अनेन तूत्पत्तिधर्मकत्वं व्युदस्यानुत्पत्तिधर्मकत्वं सम्भावयिता विषये विवेचिते सत्यसत्प्रतिपक्षत्वादनुमानं प्रवर्तते इति विषयविवेचनद्वारेण प्रमाणानुग्राहकतया तर्कस्तत्त्वज्ञानाय घटते प्रमाणस्य करणत्वेनेतिकर्तव्यतास्थानीयतर्कसहायस्यैव स्वकार्ये पर्यवसानात् न ह्यनपेक्षितदृढमुष्टिनिपीडितो जाल्मकरपञ्जरोदरे विलुठन्नपि कठोरधारः कुठारः प्रतितिष्ठति निष्ठुरस्यापि काष्ठस्य छेदाय । तथा चोक्तम् ॥

न हि तत्करणं लोके वेदे वा किञ्चिदीदृशम् ।
इतिकर्तव्यतासाध्ये यस्य नानुग्रहेर्थिता ॥ इति ।

यदि पुनरेवं तर्को नेष्यते परस्यानिष्टापादनरूपः प्रसङ्गोपि नाभ्युपगन्तव्यः स्यात् स हि तर्कादनतिरिच्यमानात्मा अस्ति च वैशेषिकाणामपि प्रसङ्गो न प्रसङ्गो हेतुराश्रयासिद्धतादिदोषात् । अत्रोच्यते । किं परपक्षाभावप्रतीतिस्तर्कः किं वा स्वपक्षसम्भावना । आद्ये पक्षे([2]) प्रमाणमेवेदम् ज्ञातुरनित्यत्वे संसारापवर्गयोरसंभव इति ज्ञानं यद्यप्रमाणं नास्माद्विपक्षाभावसिद्धिरप्रमाणेन कस्यचिदर्थस्य सिद्धेरयोगादित्यत्रास्या([3])प्रवृत्तिरेव विषयविवेकाभावात् । अथ सिद्ध्यत्यस्माद्विपक्षाभावस्तदा प्रमाणमिदं प्रत्यक्षादिषु कस्मिंश्चिदन्तर्विष्यति([4])

(१) सम्भावनात्मकः-पा॰ ३ पु॰ । (२) कल्पे-पा॰ २ । ४ पु॰ ।
(३) योगादित्यनुमानस्या-पा॰ ३ पु॰ (४) अनुप्रविशति-पा॰ ३ पु॰ ।

तद्व्यतिरेकेणान्यस्य प्रतीतिसाधनाभावादित्यकामेनाभ्युपगन्तव्यम् । प्रसङ्गोऽपि विरोधोद्भावनं तच्च कस्यचिद् बलीयसो विपरीतप्रमाणस्योपदर्शनम् । कस्तच विपरीतात् प्रमाणात् तदुपदर्शकाच्च वचनादन्यस्तर्कः । अथ स्वपक्षसम्भावनात्मकः प्रत्ययस्तर्कः अस्योत्पत्तौ किं कारणम् न तावत्स्वपक्षसाधकं प्रमाणं तस्याप्रवृत्तेः तर्केण विवेचिते विषये स्वपक्षसाधकं प्रवर्तते तदेव यदि तस्य कारणं सुव्यक्तमन्योन्याश्रयत्वम् । विपक्षाभावे प्रतीते स्वपक्षसम्भावनोपजायते इति विपक्षाभावप्रतीतिरस्य कारणमिति चेत् तर्हि विपक्षाभावलिङ्गक[1]मनुमानमेवैतत् परस्परविरुद्धयोरेकप्रतिषेधस्येतरविधिनान्तरीयकत्वात् । भवत्येवं यदि विषयमवधारयत्येवमेवेदमिति अनुजानात्ययमेकतर धर्मं न त्ववधारयति न चायं संशयोऽप्युभयकोटिसंस्पर्शाभावात् किं तु संशयात् प्रच्युतो निर्णयं चाप्राप्तः सम्भावनाप्रत्ययोऽन्य एव । तथा च लोके वक्तारो भवन्ति एवमहं तर्कयामीति न यो ग्यतावधारणाद्यत्र विपक्षाभावस्तत्रान्यतरपक्षोपपत्तिः यत्र तु तस्य सम्भवस्तत्रानुपपत्तिरित्यन्वयव्यतिरेकदर्शी विपक्षाभावं प्रतिपद्यमानः सम्भावयत्ययमनुत्पत्तिधर्मको भविष्यतीत्यस्मिन्नर्थे प्रमाणमेतत्प्रतिपादनाय योग्योयमर्थ इति प्रमाणयोग्यतां विषयस्याध्यवस्यतीति अनुमानमेव । इत्थमेव च प्रमाणमनुगृह्णातीति योग्यताप्रतीतेः प्रमाणप्रवृत्तिहेतुत्वात् अन्यथा पुनरिदं सम्भावनामात्रमनर्थकमेव स्वयमप्रमास्य सिद्ध्युपलम्भयोरनङ्गत्वाद्विषयविवेकस्यापि विपक्षाभावं प्रतिपादयता बाधकप्रमाणेनैव कृतत्वात् । अन्ये तु संशयप्रभेद एव तर्कोऽनवधारणात्मकत्वादित्याहुः ॥

**संशयस्तावत् प्रसिद्धानेकविशेषयोः सादृश्यमात्रदर्शनादुभयविशेषा[2]नुस्मरणादधर्माच्च किंस्विदित्युभयावलम्बी विमर्षः[3] संशयः । स च द्विविधः अन्तर्बहिश्च । अन्तस्तावत् आदेशिकस्य सम्यङ्मिथ्या चोद्दिश्य पुनरादिशतस्त्रिषु कालेषु संशयो भवति[4] किन्नु सम्यङ्मिथ्या वेति । बहिर्द्विविधः[5] प्रत्यक्षविषये**

(१) विपक्षाभावप्रतीतिलिङ्गक-पा॰ ३ पु॰ । (२) उभयगतविशेषा-पा॰ ६ पु॰ ।
(३) उभयालम्बी विमर्शः-पा॰ ५ पु॰ । (४) त्रिष्वपि कालेषु संशयः स्यात्-पा॰ ६ पु॰ ।
(५) बहिरपि द्विविधः-पा॰ ६ पु॰ ।

